# श्रीविष्णोर्नामसहस्राणिविशिष्टाद्वैत सम्मतार्थस्यानुशीलनम्

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य विद्यावारिधिः (पी-एच० डी०)
इत्युपाधये प्रस्तुतः शोधप्रबन्धः




निर्देशकः
डॉ० महाप्रभुलाल गोस्वामी
पी-एच० डी०
आचार्य एवं अध्यक्षः
दर्शन विभाग
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी

अनुसन्धाता-
केशव मोहन पाण्डेय
वेदान्ताचार्य, नव्यन्याय,
मीमांसा, शास्त्री

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी
मई, १९८६ ई०

# श्रीविष्णोर्नामसहस्राणिविशिष्टाद्वैत सम्मतार्थस्यानुशीलनम्

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य विद्यावारिधिः (पी-एच० डी०)

इत्युपाधये प्रस्तुतः शोधप्रबन्धः





निर्देशकः

डॉ० महाप्रभुलाल गोस्वामी

पी-एच० डी०

आचार्य एवं अध्यक्षः

दर्शन विभाग

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी

अनुसन्धाता–

केशव मोहन पाण्डेय

वेदान्ताचार्य, नव्यन्याय,

मीमांसा, शास्त्री



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी

मई, १९८६ ई०

श्री केशवमोहन पाण्डेयः, श्रीविष्णोर्नाम सहस्राणि विशिष्टाद्वैत सम्मतार्थस्यानुशीलनम् " इति विषयमधिकृत्यमन्निर्देशने विधावारिधिरित्युपाधये शोधप्रबन्धं प्रणीतवान् । सुशीलः सुचरित्रः दर्शनज्ञान सम्पन्नः सर्वथोपयुक्तो यमनुसन्धानायेति शोधप्रबन्ध समुपस्थापनाय संस्तौति -

(महाप्रभुलाल गोस्वामी)

मंगलाचरण

त्रिभुवनकमनं तमालवर्णं रविकरगौरवराम्बरं दधाने ।
वपुरलककुलावृताननाब्जं विजयसखे रतिरस्तु मेऽनवद्या ।।
युधितुरगरजो विधूम्रविष्वक्कचलुलितश्रमवार्यलंकृतास्ये ।
मम निशितशरैर्विभिद्यमानत्वचि विलसत्कवचेऽस्तु कृष्ण आत्मा ।।१।।

तस्मै रामानुजार्याय नमः परमयोगिने
यः श्रुतिस्मृतिसूत्राणामन्तर्ज्वरमशीशमत् ।।२।।

वन्दे गोविन्दतातौ मुनिमथ, मनवै लक्ष्मणार्यं महान्तं
ध्यायेयं यामुनार्यं मम हृदि तनवै राममेवाभियायाम् ।
पद्माक्षं प्रेक्षिषीय प्रथममपि मुनिं नाथमीडे शठारिं
स्तौमि प्रेक्षीय लक्ष्मीं शरणमशरणः श्रीधरं संश्रयेयम् ।।३।।

नमो नारायणायेदं कृष्णद्वैपायनात्मने ।
यदामुष्यायणा वेदा महाभारतपञ्चमाः ।।४।।

जातौ लक्ष्मणमिश्रसंश्रयधनाच्छ्रीवत्सचिह्नाद्गणेः
भूयो भट्टपराशरेति फणितः श्रीरङ्गभर्त्रा स्वयम् ।
श्री श्रीरङ्गपतिप्रसादतृणया श्रीरङ्गनाथाह्वयः
श्रीरङ्गेश्वरकारितो विवृणुतो नाम्नां सहस्रं हरेः ।।५।।

संसारे यमपण्डितो भगवति प्रागेवभूय: कलौ ।
पूर्णमिन्यतमे जने श्रुतिशिरोगुह्यं ब्रुवे साहसात् ।।
तत्रस्तोत्रमिदं प्रकाशयति यस्स्तुत्यश्च यस्तावुभौ ।
व्यास: कारुणिकौ हरिश्च तदिदं मौर्ख्यं सहेतां मम् ।।६।।

कूर्मादीन् दिव्यलोकं तदनुमणिमयं मंडपं तत्र शेषं ।
तस्मिन्धर्मादिपीठं तदुपरिकमलं चामरग्राहिणीश्च ।।
विष्णुं देवीविभूषायुधगणमुरगं पादुके वैनतेयं ।
सेनेशं द्वारपालान् कुमुदमुखगणान्विष्णुभक्तान् प्रपद्ये ।।७।।

रमादिसंलालितपादपद्मं रमानिवासं रमणीयकीर्तिम् ।
अहेतुसंपालितभक्तजालं मृदुं दयालुं शरणं प्रपद्ये ।।८।।

भू: पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे ।
कर्णाविशा: शिरो द्यौर्मुखमपि दहनो यस्य वास्तेयमब्धि: ।।
अन्तस्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यै: ।
चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि ।।९।।

केनोपायेन लघुना विष्णोर्नामसहस्रकम् ।
पठ्यते पण्डितैर्नित्यं श्रोतुमिच्छाम्यहं प्रभो ।।१०।।

नमो स्त्वनन्ताय सहस्रमूर्तये, सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नम: ।।११।।

अर्थे हरौ तदभिधायिनि नामवर्गे,

तद्वचन्जकौ मयि च बन्धविशेषमेत्य ।

सेवध्वमेतदमृ तं प्रणिपत्य याचे ।

मध्यस्थमत्सरिजना इह मा च भूवन् ।।१२।।

श्रीकाश्यपान्वयपयोनिधि पूर्णसोमम् ।

वानाद्रियोगिपदपंकज भृङ्गराजम् ।

श्री वालदेशिकमहं शरणं प्रपद्ये ।

श्रीशालग्रामगुरुवर्य महं नमामि ।।१३ ।।

oooooooooo
oooooooo
oooooo
ooo

विषयानुक्रमणिका

पृष्ठ संख्या

विजय:, पनवीसु:, उपेन्द्र:, वामन:, शुचि:, सर्ग:, भूतात्मा, नियम:, यम:, वैद्य:
वीरहा, माधव:, मधु:, महाबल:, महाशक्ति:, महाद्युति:, श्रीमान्, अमेयात्मा,
सतांगति, सुरानन्द:, गोविन्द:, गोविन्दापति:, दमन:, हंस:, सुतपा:, पद्मनाभ:,
अमृत्यु:।

तृतीयो ध्याय:

तृतीयशतकम्

वक्ष्यमाणानां शब्दानामध्ययनम् -

सर्वदृक्, सिंह:, संधाता, स्थिर:, अज:, शास्ता, विश्रुतात्मा, धाम:,
सत्य:, निमिष:, अनिमिष:, वाचस्पति:, ग्रामणी, न्याय:, नेता, आवर्तन:,
संवृत:, वन्हि:, अनिल:, धरणीधर:, सुप्रसाद:, प्रसन्नात्मा, सत्कर्ता, सत्कृत:
साधु:, जन्हु: नारायण:, नर:, सिद्धार्थ:, सिद्धिसाधन:, वृषभ:, विष्णु:
वृषोदर:, विविक्त: श्रुतिसागर:, दुर्धर:, वाग्मी, महेन्द्र:, वसुद:, वसु:, प्रकाशन:,
प्रतापन:, मन्त्र:, भास्करद्युति:, भानु:, सुरेश्वर:, पवन:, पावन:, कामहा, कामकृत्,
काम:, कामप्रद:, प्रभु:।

चतुर्थो ध्याय:

चतुर्थशतकम्

वक्ष्यमाणानां शब्दानामध्ययनम् -

युगादिकृत्, नैकमाय:, महाशन:, अनन्तजित्, इष्ट:, शिखण्डी, वृष:,
महीधर:, प्रथित:, प्राण:, अपांनिधि:, अप्रमत्त:, स्कन्द:, वरद:, बृहदभानु:
आदिदेव:, तारण:, तार:, शौरि:, पद्मी, अरविन्दाक्ष:, रुद्र:, महाक्ष:, शरभ:,
लक्ष्मीवान्, विदार:, रोहित:, हेतु:, वेगवान्, उद्धव:, श्रीगर्भ:, परमेश्वर:, गहन:,
गुह:, संस्थान:, तुष्ट:, राम:, विरत:, नेय:, नय:।

पन्चमो ध्याय:

पन्चमशतकम्

वक्ष्यमाणानां शब्दानामध्ययनम् -

अनय:,वीर:,धर्म:,वैकुण्ठ:,पुरुष:,पृथु,व्याप्त:,वायु:,ऋतु:,
काल:,परिग्रह:,उग्र:,दक्ष:, विश्राम:,अर्थी:,अनर्थ:,महाभोग:,स्थविष्ठ:,
भू:,महामख:,नक्षत्री,क्षाम:,यज्ञ:,महेज्य:,सतांगति सर्वज्ञ:,सुमुख: सुखद:,सुहृत्
वीरबाहु,स्थापन:,व्यापी,वत्सल:, रत्नगर्भ:,धर्मी,सत्,अविज्ञाता, विधाता,
कृतलक्षण:,सत्वस्थ:,महादेव:,देवेश:,देवभृत्,गुरु:,गोपित:,गोप्ता,ज्ञानगम्य,
पुरातन:,

षष्ठमो ध्याय:

षष्ठशतकम्

वक्ष्यमाणानां शब्दानामध्ययनम्

शरीरभूतभृत्,भोक्ता,कपीन्द्र:,सोमप:,अमृतप:,पुरुषत्तम:,
विनय:,सात्वतांपति,जीव:,मुकुन्द:,अनन्तात्मा,अज: महार्ह:,जितामित्र,
नन्दन:,नन्द:,महर्षि:,कृतज्ञ:, त्रिपद:,गुह्य:,गहन:,चक्रादाघर:,अजित:
हठ:,वार्ष्ण:,महामना:,नन्दी,सहिष्णु: गतिसंतम:,दारुण:,द्रविणप्रद:,
व्यास:,त्रिसामा,सामग:,भेषजम्,शम:,शान्त:,शुभाङ्ग:,कुमुद:,गोहित:,
गोप्ता ।

सप्तमो ध्याय:

सप्तमशतकम्-

वक्ष्यमाणानां शब्दानामध्ययनम्-

वृषभाक्ष:, वृषप्रिय:, निवृत्तात्मा, श्रीवास:, श्रीमतां वर:, श्रीद:, श्रीनिधि:, श्रीधर:, स्वक्ष:, शतानन्द:, सत्कीर्ति, भूशय:, भूषण:, भूति, अशोक:, अर्चित:, कुम्भ:, विशोधन:, अनिरुद्ध:, शौरि, शूर:, केशव:, हरि:, कामदेव:, कार्या, विष्णु:, वीर:, अनन्त:, ब्रह्मण्य:, ब्रह्म, ब्रह्मी, ब्रह्मज्ञ:, ब्राह्मणप्रिय:, महाकर्मा, महोरग:, महाकवि: स्तवप्रिय:, स्तोत्रम्, स्तुत: रणप्रिय:, पूरयिता, पुण्यकीर्ति:, तीर्थकर:, वसुरेता, वसुप्रद: वासुदेव: ।।

अष्टमो ध्याय:

अष्टमशतकम्

वक्ष्यमाणानां शब्दानामध्ययनम्

वसु:, वसुमना:, हवि:, सद्गति:, सता, सद्भूति, शूरसेन:, सन्निवास:, सुयामुन:, भूतावास:, वासुदेव:, दर्पहा, अदृप्त:, दुर्धर:, विश्वमूर्ति, दीप्तमूर्ति:, अनेकमूर्ति: अव्यक्त:, एक:, नैक:, स:, व:, क:, किम् यत्, तत्, लोकनाथ: हेमाङ्ग: वराङ्ग:, विषम:, शून्य:, घृताशी, अचल:, मानद:, मेधज:, धराधर:, तेजोवृष:, प्रग्रह:, निग्रह:, व्यग्र:, नैकशृङ्ग:, गदाग्रज:, चतुर्मूर्ति:, चतुर्बाहु:, चतुर्व्यूह:, चतुर्गति: चतुरात्मा, चतुर्भाव:, सुतन्तु:, इन्द्रकर्मा, कृतकर्मा, उद्भव:, सुन्दर: सुन्द:, सुलोचन: ।

नवम् अध्याय:

नवमशतकम्

वक्ष्यमाणानां शब्दानामध्ययनम्

अर्क:, वाजसनि:, अयन्त:, जनार्दन:, महाहृद:, महागति:, महाभूत:, महानिधि:, कुमुद:, कुन्दर:, कुन्द:, पर्जन्य: पावन:, सर्वतोमुख:, सुलभ:, सिद्ध:, न्यग्रोधोदुम्बर:, अश्वत्थ:, सहस्रार्चि:, सप्तैधा:, सप्तवाहन:, अणु:, बृहत्, कृश:, स्थूल:, निर्गुण:, महान्, अधृत:, स्वधृत:, स्वास्य, भारभृत्, योगी, दाम:, सुपर्ण:, धनुर्वेद:, अदम:, सर्वसह:, नियन्ता, यम:, सात्त्विक:, सत्य:, अर्ह:, प्रीतिवर्धन:, विहायसगति:, रवि:, विरोचन:, सूर्य:, सविता, सुखद:, नैकद:, अग्रज:, सदामर्षी, अद्भुत:, सनात्, सनातनतम:, कपिल:, कपिरव्यय: ।

दशमोऽध्याय:-

दशमशतकम्

वक्ष्यमाणानां शब्दानामध्ययनम्

स्वस्तिद, स्वस्तिकृत्, स्वस्ति, स्वस्तिभुक्, स्वस्तिदक्षिण:, कुण्डली, चक्री, विक्रमी, शब्दातिग:, शब्दसह:, शिशिर:, शर्वरीकर:, अक्रूर:, पेशल:, दक्ष: दक्षिण:, क्षमिणां वर:, विद्वत्तम:, उत्तारण:, पुण्य:, दु:स्वप्ननाशन:, वीरहा, रक्षण:, जीवन:, अनन्तरूप:, जितमन्यु:, भयापह:, विदिश:, व्यादिश:, अनादि:, लक्ष्मी:, सुवीर:, जनन:, भीम:, धाता, पुष्पहास:, प्रजागर: प्रणव:, पण:, प्राणधृत, प्राणजीवन:, तत्त्वम्, एकात्मा, तार:, सविता, प्रपितामह:, यज्ञ:, यज्वा, यज्ञवाहन:, यज्ञभृत्, यज्ञी, यज्ञसाधन:, अन्नम्, अन्नाद:,

आत्मयोनिः, स्वयंजातः, वैखानः, पितरीशः, नन्दकी, चक्री, शाङ्र्गधन्वा, गदाधरः, रथाङ्गपाणि, अदाम्यः, सर्वप्रहरणायुधः ।

उपसंहारः

पुस्तकानां सूची

## भूमिका

भक्तिशास्त्रमवलम्ब्य अनेके ग्रन्थाः मनीषिभिः प्रणीताः विद्वद्भिः समादृता। परन्तु नात्र सन्देहो यत् आचार्यवर्यैः रामानुज महोदयैः भक्तेः समीक्षात्मकं साङ्गोपाङ्गं विश्लेषणं प्रस्तुतम्। न तथा तत्पूर्ववर्तिभिः कश्चिदपि मनीषिभिः तथा निरूपितमपितु तदनन्तरमेव अन्यैः आचार्यैः तद्विश्लेषणं महता संरम्भेण वैज्ञानिक दृष्ट्या प्रस्तुतम्। आचारेण च तथा कर्तुं दीप्तिं शिक्षितुन्च।

एतत् तु अवितथं वचः यत्भक्तेः समीक्षात्मकं निरपेक्षं तुलनात्मकमध्ययनं रामानुजाचार्य दृष्ट्या प्रतिनामविवरणपूर्वकं नानुष्ठितं न वा सम्यक् विनिश्चितम्।

वर्तमान युगे जड्वादि वैज्ञानिकाः पूर्णतया लोके (प्रथिताः विद्यन्ते विज्ञान प्रभावश्च भुवि देदीप्यमानः दृश्यते।

एतदपि सत्यमेव यत् विभिन्न क्षेत्रेषु आध्यात्मिक चिन्तया मनुष्या जीवनयापनाय सर्वथा सन्नद्ध धारावाहिक् रूपेण विद्यते।तत्र भक्तेः प्राधान्यम् इदानीं तने काले वर्तते।आगामिनि च भविष्यति। एवञ्जातीया चिन्ता यावत् मानव सभ्यता आर्य संस्कृतिः च पूर्णतया विराजते।भवतुनाम कालकलितं मानव सभ्यता परिवर्तनं परमपि सभ्यसमाजेषु भक्तेः पूर्णप्रवणता अन्यथानैव स्यादिति।

तादृशः भक्तिःप्रवाहः मानवः समाजे सुदृढो विद्यते।अतः मानव मनसः उच्छेदनात्पूर्वमसम्भव एव तदुच्छेदः जानयति तत्र भवन्तो भवन्तः यत् इदानीमपि मनीषिणां भक्ति सम्बन्धिनि जिज्ञासा विद्यते। ज्ञान प्रायशः तदनुकूला कृतिश्च उपलभ्यते।शोधप्रबन्धस्यास्य आलोच्य विषयः भक्ति दर्शनस्य समीक्षात्म विमर्शः। नात्रसन्देहः यत्भारतीय संस्कृतिः अखण्ड सत्याराधिकापि परं खण्ड सत्यस्य महत्त्वमक्षुण्णं स्वीकरोति।

अस्य देशस्य विद्या कला सर्वापि दृष्टिः भक्ति रसानुप्राणिता एव विराजते । व्यष्टि समूहेन समष्टेः सर्वातिशमूल सत्तायाः अद्भुतः समन्वयः विलक्षण विचक्षणञ्च सामञ्जस्यं विशिष्टाद्वैत दर्शनस्यवैशिष्ट्यम् ।

नूनमेव अखण्ड सत्यस्य स्वरूपमुद्घाटितम् आचार्यवरेण परं भारतीय लोकस्य सर्वधा समन्वय विश्वं प्रति एकात्म्यभावः अस्य ब्रह्माण्डान्तर्गतस्य चिदचिद्रूपस्य रक्षणाय सम्वर्धनाय राष्ट्रस्य परिपोषणाय च आहित चित्तो भवेत् । साधनायाः कश्चिन्मूलाधारो भवति इदमवलम्ब्य लोकालोकाय जनाःप्रवर्तन्ते ।

अत एव नु उक्तं उपनिषदि

"भूमैव सुखं नाल्पे सुखमस्ति"

सत्यशिवसुन्दरस्य आनन्दात्मकस्य प्राप्तये सदा मानवः सचेष्टः विद्यते । तं प्राप्य च नान्यत्किमपि प्राप्य अवशिष्यते । यमवाप्य सर्वथाभाव एव दूरीकृतो भवति । जीवनं प्रतिपदं भगवत्पदप्राप्तये तत्स्मरणार्थमेव संयतते ।

भारतीय साहित्यं वागर्थाविव संपृक्तम् ।

तत् एव च समुद्भूतम् ।यथा चितः महत्त्वं तथैव अङ्गभूतायाः प्रकृतेरपि अपरिहार्य महत्त्वम् । अतएव चिदचिद्विशिष्टमेव ईश्वरमामनन्ति मनीषिणः । विभिन्नेषु अध्यात्ममार्गेषु धर्मशान भक्तीनां समानं वैशिष्ट्यं उद्घोषित तत्तदाचार्यवर्यैः ।परन्तु अस्मिन् समीक्षात्मके निबन्धे भक्तेः सर्वातिशायिनिमहत्ता या श्रुतिषु प्रकटिताः सैव पुनः पुनः समर्थ्यते ।

मोक्ष साधनेषु भक्ते विशिष्टं महत्त्वं विद्यते । भक्तिरेव चरमं परं च साध जीवनस्य एतस्याः भक्तेः त्रिधाः विभागः प्रदर्शितः आचार्यैः प्रवर्तकावस्था साधकावस्था सिद्धावस्था च ।प्रथमावस्थायां साधनायाः प्राधान्यम्,दार्शनिकैः शब्दाध्वरैः तदाप्यमङ्गीकृतम् ।तथा च नामोच्चारणे भगवतः स्वरूपस्य स्थायि संस्कारः अन्तःकरणे प्रतिबिम्बितो भवति ।भगवतः मंगलमधुराकृति वक्तुः श्रोतुश्च मनोमुकुरे प्रतिष्ठिताः मनोमय मूर्तिः स्वरूपतामाधत्ते ।

मानस: तादृशमभिन्नत्वं तत्स्वरूपेण जायते । तेन कदापि विस्मृति पथं नायते । सर्वत्र तत्स्वरूपमेव दरिदृश्यते । प्रतिबिम्बा ग्रहणाच्च द्रुतचित्ते द्रवित लाक्षादिषु रागवद् भवति । येन सर्वत्र स एव राग: उपलभ्यते । एवमेव अन्त:करणे प्रतिष्ठित स्वरूपमेव सर्वत्र भक्तो: आदधाति । कदाचित् आह्लादिनी प्रेममयी वृत्तिमाश्रिता । भूत तत्त्व कणिकासु चैतन्यरूपेण परिव्याप्नोति । उक्त: कालस्यैव जीवने काचिन्मंगलमयीमधुरामा विराजते । सर्वत्र एकमेव तत्त्वमवलोकयति आर्द्र: भक्त: ।

इयमेव रागिनां भगवद्रागिणां चरमापरमावस्था । इमामेवावस्थामासाधनवद उद्धव: ज्ञान सम्पन्नोऽपि भक्ति: प्रवाहे प्रवाहित: शान्तिमधिगम्य रसमयो एकताभाग् सम्प्राप्य धन्योभवति कृत्यकृत्यो भवति ।

इयमेव भक्तानाम् अनन्यावस्था अपूर्वा अनिर्वचनियाचावस्था तत्त्वं सम्प्राप्य भेदज्ञानम् समाप्तिमायाति । एतस्यामेवावस्थायां ज्ञानिन: ज्ञानस्य ज्ञेयस्य च सर्वथा अभिन्नत्वमुद्भासते । नात्र संदेहो यत्भगवत्स्वरुपं अप्राकृतं तत्त्वम् । परमपि शब्दर्थयोरभेदात् यथा चिदानन्दमयो भगवान् तथैव तन्नाम्नापि भक्तानां पुरत: चिदानन्दरुपेण अभिव्यज्यते ।

प्रथमावस्थायां चित: आनन्दस्य च अभिव्यक्तिर्भवति । किन्तु साधना प्रभावात् अनभिव्यक्तरुपमप्यभिव्यक्तं भवति । नियमेन प्रवहमानेयम् चिदकाल साधना कणादिकस्य कारणं भवति । इदन्च कर्म साधना यस्या नाम साधनयापि निरुपणं भवति । सा चित्शुद्धिं शरीरशुद्धिन्च सम्पादयति ।

साधनावशादेव नवधाभेदभिन्नयाभक्त्या मनसा, वाचा, कर्मणा, चारधनतत्पराणाम जनानां न केवलं चित्शुद्धिरपि तु भूत् शुद्धिरपि जायते ।

फलत: भौतिकमशुद्धं शरीरं विगलितं सत्स्वावभिनवां चित्स्वशरीररुपता-मायते । बहुधा श्रूयते यद्भक्त: बुभुक्षा पिपासादि शून्य: सर्वथामुक्त: समस्त भौतिक दुखविरहित: उन्मत्तोभवति ।

प्राकृत दृष्ट्यावलोकयन् जनः प्राकृतधर्मविवर्जितं निर्मलम् अजरम् अमरं भावशरीरधारिणं भक्तं उन्मत्तमेव कथयेत् । अत एव तु भागवतोक्तम् -

क्वचिद् रुदन्त्यच्युत चिन्तया क्वचिद्
हसन्ति नन्दन्ति वदन्ति अलौकिकाः ।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजम्
भवन्ति तूष्णीं परमेव निर्वृताः ।

अत एव ईश्वर प्रणिधानाद् वा इति योगसूत्रे उक्तम् । किमन्यत् अद्वैतविधिपथिकैःउपास्यः मधुसूदनोऽपि कथयति -

ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियं
ज्योतिः किंचन योगिनो यदिपरं पश्यन्ति पश्यन्तु ते ।
अस्माकं तु तदेव लोचन चमत्काराय भूयाच्चिरं
कालिन्दीपुलिनेषु यत्किमपि तन्नीलं महोधावति ।।

एवमेव भक्तेः विश्लेषणमद्वैताचार्येरपि कृतम् । पञ्चदश्यामपि-

मूषासिक्तं यथा ताम्रं तन्निभं जायते यथा ।
रूपादीन् व्याप्नुवच्चित्तं तन्निभं दृश्यते ध्रुवम् ।

एवमेव बहुभि आचार्यैः भक्ति विषयेः बहुधा समीदितम् आचारितञ्च अस्माभिरपि वाङ्मनः कायनिष्पाद्यजपध्यानार्चनप्रभृतिदेवताराधनात्मको धर्मः, तत्र परमं पृच्छति -

'को धर्मः सर्वधर्माणां भवतः परमो मतः ।

अग्रे संसारबन्धनात् मुक्तिसाधनप्रदर्शने प्रसंगे भीष्मेनोक्तं

जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ।।

जगमाजगमस्य स्वामिनं स्तोतौ नवजैश्वर्यैभवम् परमोदारम् आलम्बनीकृतेन मनुष्यः सर्वदुःखातिगो भवति ।अग्रे पि - भक्त्या तदर्चनमेव सकलफलसाधकं इति, विष्णुसहस्रनामाख्ये ग्रन्थे प्रदर्शितम् ।

अस्माभिः रामानुजप्रणीतस्य विष्णुसहस्रनामभाष्यस्य परमां प्रीतिमासाद्य लोकालोकाय लोकनाथस्य विष्णोः तत्कृतं व्याख्यानमेव अस्मदनुसंधान विषयत्वेन स्वीकृतं विदुषां पुरतश्च उपास्थापयन् इयं प्रबन्धं अपूर्वमानन्दं विन्दानोमि ।

अस्मिन् प्रसंगे कानिचित्प्रमाणानि विदुषामामोदाय प्रस्तुयते -यथा-

इह खलु निखिलो पि चेतयमानः प्रमाणतः प्रमेयं परिच्छिन्दन्, तच्चेत् प्रमेयमनुकूलं तदुपाददीत,यथा स्रक्चन्दनवनिता दिकम्, तच्चेद्विपरीतम् अपोहेत, यथा दुरकण्टकादिकम्, तच्चेदनुभयरूपम् उपेक्षेत, यथा काष्ठलोष्टादिकम् ।तत्र प्रत्यक्षादिप्रमाणान्तरगोचरयोरर्थकामयोः अत्यल्पत्वानर्थकरत्वबीभत्स्यत्वभङ्गुरत्वदुःखभिन्नत्वदुःखसाधनत्वाधनंतदोषानुषङ्गेण त्याज्यत्वात्,शास्त्रप्रमेययोर्धर्मपरतत्त्वयोः तद्वैपरीत्यादनन्तमङ्गलसंगतत्वाच्च,शास्त्रतदर्थोपादेयत्वं प्रकृष्यते ।यथाहुरैतिहासिकाः पौराणिकाश्चैककण्ठाः-

सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ।
वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ।। इति

तत्र चतुर्दशविद्यास्थानप्रधानभूतस्य वेदस्य इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ।इति प्रकारेणेतिहासपुराणाभ्यामर्थे निर्णेतव्ये पुराणेभ्य इतिहासोत्कर्षे च विवदिते श्रीमद्रामायणवन्महाभारतं

शरणम् ।

तत्र- महाभारतसारत्वात् ऋषिभिः परिगानतः ।
वेदाचार्यसमाहारात् भीष्मोत्कृष्टमतत्वतः ॥
परिग्रहातिशयतो गीताकाव्यस्थितेश्च नः ।
सहस्रनाम्नामध्याय उपादेयतमो मतः ॥

महाभारतं हि परिग्रहविशेषावसिताविप्लववचनसौष्ठवाधात्मकत्वात् इतिहासत्वकृतात्प्राबल्यात्, पुराणेषु तावत् वायुपोक्तशैवयोः

मतिमन्थानमाविध्य येनासौ श्रुतिसागरात् ।
जगद्धिताय जनितो महाभारतचन्द्रमाः ॥

भविष्यत्पुराणे-

विभेति गहनाच्छास्त्रान्नरस्तीव्रादिवौषधात् ।
भारतः शास्त्रसारो यमतः काव्यात्मना कृतः ॥

मात्स्ये-

यस्य द्वैपायनः पुत्रः स्वयं विष्णुरजायत ।
प्रकाशो जनितो येन महाभारतचन्द्रमाः ॥

वैष्णवे -

कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत् ॥

मार्कण्डेये-

व्यासवाक्यजलौघेन कुधर्मतरुहारिणा ।
वेदशैलावतीर्णेन नीरजस्का मही कृता ॥

तथा ऋषिभि: परिगानत: -

ऋषिभि: परिगीतानि इत्येतद्विवरणावसर एवैष हेतुरुपपादयिष्यते ।

किन्च, वेदाचार्यसमाहारात् - भगवान् हि वेदाचार्य: कृष्णद्वैपायन: परमाप्ततम:, भगवन्नारायणावतारत्वेन निरतिशयज्ञानैश्वर्यादिकल्याणगुणवत्तया निरस्तसमस्तविप्रलम्भादिदोषसंभावनत्वात्, कलिकलुषमन्दाधिकारिमनुष्यानुग्रहाय व्यस्तसमस्तवेदत्वात्, वेदार्थोपबृंहणवेदार्थतत्त्वानुष्ठानयोर्ज्ञानसंशयविपर्ययपरिजिहीर्षया प्रणीतपञ्चमवेदत्वात्, स्ववचनेन क्षात्त्रियं विश्वामित्रं ब्राह्मणीकृतवतो भगवतो वसिष्ठस्य नप्तृत्वात्, वसिष्ठपुलस्त्यवरप्रदानलब्धदेवतापारमार्थ्यज्ञानपुराणसंहिता-कर्तृत्वादिविषयवरातिशयवत्या ऊढ्.ना विष्वपि पुराणेषु प्रसिद्धस्य भगवत: पराशरस्य चापत्यत्वात्, अनन्यसाधारणतपस्स्वाध्यायविशेषैश्चाशेषपरमर्षिपरिगणत्पूजितत्वाच्च । एवंविधेन अनेन ऋषिभि: परिगीतानामेव भगवन्नाम्नामयैतत्स्तोत्ररूपेण समाहृतत्वादत्यायसुपादेयतम: ।।

अपि च भीष्मात्कृष्टमतत्यत: - भीष्मो पि हि (प्रत्यायित) प्रतीततम: । तथा हि, राजधर्मेषु धर्मराजाय भगवता व्यासेन श्रोतुमिच्छसि चेद्धर्मान्निखिलेन नराधिप प्रैहि भीष्मं महाबाहो वृद्धं कुरु पितामहम् ।।

स ते सर्वरहस्येषु संशयान् मनसि स्थितान् ।
छेत्ता भागीरथीपुत्र: सर्वज्ञ: सर्वतत्त्ववित् ।
साक्षाद्ददर्श यो देवान् सर्वान् शक्रपुरोगमान् ।।

यच्च त्वं वक्ष्यसे भीष्म पाण्डवायानुपृच्छते ।
वेदप्रलापा इव ते स्थास्यन्ति वसुधातले ।।

भगवता नारदेन च -

कृत्स्नान् हि विविधान् धर्मांश्चातुर्वर्ण्यस्य वेत्त्ययम् ।
तस्मादेनमनुप्रश्न्वीध्वं संशयान् मनसि स्थितान् ।।

इत्यादौ च प्रपञ्च्य, एवं बहुमहर्षिवृद्धसेवादीर्घब्रह्मचर्यतपस्समाधिलब्ध-सर्वधर्मसाक्षात्कारादिप्रभावविशेषवत्त्या प्रशस्य, परतत्त्वधर्मप्रवक्तृतया वरान् वितीर्य नियुक्तत्वात्, माता पितृशुश्रूषणतत्प्रसादवरलाभसौभाग्यात्, स्वयं च -

दाहो मोहः श्रमश्चैव क्लमो ग्लानिस्तथा रुजः ।
तव प्रसादाद्गोविन्द सद्यो व्यपगतानि मे ।।

एवंविधस्य भीष्मस्य -

एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः

इत्यादिना अधिकतमस्वमतत्वेन स्थापितत्वाच्च अयमध्यायः उपादेयतमः

परिग्रहातिशयतः -

परिग्रहो हि सार्वभौमो भगवन्नामसहस्रस्य । शास्त्रेषु तावत् सभापर्वणि देवो नामसहस्रवान् इति भगवानपि नामसहस्रवत्त्वेन सूच्यते । श्रीविष्णुधर्मे च श्रीगजेन्द्रमोक्षणे- सहस्रशुभनामानमादिदेवमजं विभुम् । इति । अत्र चोपोद्घातफल-श्रुत्योर्गुणप्रपञ्चो दृश्यते । आयुर्वेदादिषु च दृष्टादृष्टशास्त्रेषु, यथा चरकसंहिताया

विष्णुं सहस्रमूर्धानं चराचरपतिं विभुम् ।
स्तुवन्नामसहस्रेण ज्वरान् सर्वान् व्यपोहति ।।

विश्वं - ओं विश्वाय नमः

अर्चनोपयुक्तानां प्रणवपूर्वाणां नमः शब्दोत्तराणाम् अकारादि-वर्णान्तानां विश्वादिनाम्नां चतुर्थ्यन्तरूपादिकप्रदर्शिका: । अथ पञ्च-सिद्धान्तनिष्ठानिर्णयेन पर, व्यूह विभवविशेषेणु स्वानाम अर्थप्रकरणौ-चित्यापौनरुक्त्यप्रभृतिभिः न्यायैर्व्यवस्थाप्य, व्याकरणानिरुक्तार्थ-निर्वचनप्रस्थानेन निरुच्यते, तत्र पूर्वं सर्वतोमुखं भगवतः पूर्णत्वमाह-

विश्वम् इति विशत्यवयवा नित्यर्थे

'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' उणादौ प्रथम पादे इति क्वन प्रत्ययः ।

यथा मोक्षधर्मे संयमाय पञ्चशिखः-

वेशनाद्विश्वमित्याहुर्लोकानां काशिसत्तम
लोकाश्च विश्वमेवेति प्रवदन्ति नराधिप ।। इति ।

भाष्यम् -

स्वाभाविकानवधिकातिशयषाड्गुण्यैकतानैः स्वरूपरूपगुणविभवैः परिपूर्णं इत्यर्थः ,कात्स्न्र्यवचनत्वादस्य, आदौ अनवच्छेद्यमहाविभूतित्वस्य संकीर्तनयोग्यत्वाच्च ।

"तदशिष्यं संज्ञाप्रमाणत्वात्"[१]
"यथोपलम्भं सर्वत्रलिङ्गनियमः"

---

१- पा०अ० १।२।५३

'कार्यवाचि विश्वशब्दः कारणे वर्तते'[1]

इति केचित् तन्नार्त, सर्वेषां नाम्नाम्, योगरूढिम्यां भगवति स्वशब्दत्वोपपादनात् जघन्यवृत्तेरयुक्तत्वाच्च ।

अन्ये विश्वमिति ब्रह्मप्रपञ्चयोरभेदपरं प्रपञ्चितवन्तः तत् वञ्चनमात्रम्[2] ।

तथा हि- न तावत् विश्वपदम् अभेदवाचि न च[3]

तत्त्वमस्यादिवत् सामानाधिकरण्येनैक्यपरम्, साक्षानां स्वातन्त्र्येण ऐक्यपरत्वाविवक्षणात् अतस्व हि (विश्वम विष्णुः इति अविशेष्य लिङ्गत्वम् निरस्तश्चायमवागेव पदाः अन्यत्र चानेकत्र इदमेव पूर्णत्वम् सर्वैनामभिः (विष्णुरित्यादिभिः) विशिष्यते ।

निरुक्ति-

विश्वम् सर्वत्रपूर्णत्वात् स्वरूपगुणवैभवैः ।

---

१- शंकरभाष्यम्

२- शंकरभाष्यम्

३- छान्दोग्योपनिषदि ६।८।७

विष्णुः- ओं विष्णवे नमः

विभवानुप्रवेशेन तावद्विशिनष्टि-

(विष्णुः) इति- स्वविभूतिभूतं चिदचिदात्मकं सर्वं विशतीति

यथा-

"विवेशभूतानि चराचराणि"[1]

"तदेवानुप्राविशत्"[2] इत्यादि

व्याप्य सर्वानिमाल्लोकान् स्थितः सर्वत्र केशवः ।
ततश्च विष्णुनामासि विशेर्धातोः प्रवेशनात् ।।

विश्,प्रवेशने इति धातुः तुदादिः तत्र नुप्रत्ययात्
विष्णुरिति ।

श्रीवराहे ताच्छील्यादि विषयेण नुप्रत्ययेन तस्य महिम्नः
स्वाभाविकत्वमुच्यते ।

पूर्णत्वव्याप्तिविषयत्वेन नाम्नोरपुनरुक्तिः

निरुक्ति-

चराचरेषु भूतेषु वेशनात् विष्णुरुच्यते ।

---

१- तै०ना० ६।१।४

२- तै०आ०२।६।२

वषट्कारो - ओं वषट्काराय नमः

आकाशादि वैलक्षण्येन एतद्व्याप्तेः प्रयोजनमुच्यते, वषट्कारः । सर्वं वशं स्वेच्छानुवर्ति करोतीति,करोतेः कर्मण्यण् ।

'वश कान्तौ' धातोः अदादिः इत्यस्मात् धातोः

निरुक्ति-

स्वेच्छयायां वशे सर्वं वषट्कारः करोतिसः

'सर्वस्य वशो सर्वस्येशानः'[1]

भूतभव्यभवत्प्रभु- ओं भूतभव्यभवत्प्रभवे नमः

अतः भूतभव्यभवत्प्रभुः कालत्रयवर्तिनां प्रभुः स्वामी शेषणेति यावत् ।

'विप्रसंभ्योड्व संज्ञायाम्'[2] इति डुः समुदायस्य संज्ञात्वात् प्रत्ययाविरोधः,

घुष्यन्ति हि शास्त्राणि

'पतिं पतीनाम्' परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्[3]

---

१- बृ०उ० ६।४।२२

२- पा०अ० ३।२।१८०

३- श्वेत०उ०६-७

'कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्'[1]

'जगन्नाथस्य भूपते'[2]

निरुक्ति-

त्रिकालवर्तिनां शेषणी (भूतभव्यभवत्प्रभुः)

भूतकृद् - ओं भूतकृते नमः

पुनः शेषित्वोपपादकानि पञ्च नामानि
सर्वाणि भूतानि स्वतन्त्रः सृजतीति भूतकृद्।

'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च'[3] इति अकर्मकात् कर्तरि भवति -

सर्वत्र विशेषणविशिष्टकर्माणि एवं तत्र तत्र ज्ञेयम्
भूतानि समस्तानि करोति स्वतन्त्रसृजतीति भूतकृत्

निरुक्ति-

भूतानि योसौ सृजति स्वातन्त्र्येण स भूतकृत्

---

१- भा०सं० ३८१०अ०श्लो० २३

२- भा०आनु० १४९-१२

३- पा०अ० ३।४।७२

भूतभृद् - भावो - ओं भूतभृते नमः, ओं भावाय नमः

भूतानि बिभर्तीति - भूतभृत्

'विश्वं बिभर्ति भुवनस्य नाभिः'[1]

तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः'
एवमेवैताभूतमात्राः प्रज्ञामात्रास्वर्पिताः -
प्रज्ञामात्राः प्राणेष्वर्पिताः'[2] इति

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः'[3] ।।

उक्तवक्ष्यमाण सर्वविभूतिभिः कलापीव प्रचलाकेन विशिष्टतया भवतीति भावः ।

'भवतेश्चेति वक्तव्यम्'[4] काशिकावृत्तौ इति ण प्रत्ययः तस्मिन् भगवतिप्रकारतया अन्तरभावादेव हि सर्वस्य तद्विभूतित्वव्यपदेशः।

---

१- तै०ना० १-२

२- कौषीतकि० ३-८

३- गीता १५-१७

४- पा०अ० ३।१।१४३

भूतात्मा - ओं भूतात्मने नम:

इयम् विभूतिविभूतिमद्भावं शरीरात्मभावलक्षणम् विशिनष्टि भूतात्मा इति ।

सर्वेषां भूतानां आत्मा, अवरात्मनोपि इदमेव स्वशरीरं प्रत्यात्मत्वम् यद्व्याप्य साक्षात्प्रवृत्त्यादिषु नियच्छति: ।

एवं परस्वर्वमिति विशेष:, दारागारक्षेत्रादि विलक्षणेन अत्यन्तपारतन्त्र्येण अन्तरङ्गो हि देहस्यात्मविभूतिभाव: ।

"य आत्मनि तिष्ठन्"[१]

"यस्यात्माशरीरम्"[२]

भूतभावन: - ओं भूतभावनाय नम:

एष सर्वभूतान्तरात्मा[३]

"जगत्सर्वं शरीरं ते"[४]

"तानि सर्वाणि तद्वपु:"[५]

---

१- माध्यन्दिनशाखायाम्

२- माध्यन्दिनशाखायाम्

३- सु०उ० ७

४-रामायण युद्ध १२०-२६

५- वि०पु० १-२२-८६

तानिधारकपोषकभोग्य प्रदानेन वर्धयतीतिभूतभावनः

"नन्द्यादिभ्योल्युः"[1]
"कृत्यल्युटो बहुलम्"[2]

इति वा कर्तरि ल्युट्

एवं भावनः प्रतर्दनः इत्यादयोऽपि ल्युट्प्रत्ययान्ताः यथा-

स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम्
भूतभावन भूतेश देवदेव जगत्पते[3] ।।

एवं स्वरूपस्थिति प्रवृत्तिपालनैः शेषित्वमुपपादितम्

"उत्पादनपोषणादिभिरुपादीयमानं प्रत्युद्देश्यं हि शेषी"
इति "शेषःपरार्थत्वात्"[4] इति समर्थितम् ।

निरुक्ति-

धारकादिप्रदानेन यश्च वर्द्धयति स्वयम् ।
भूतानि नित्यं झटिति सतु स्यात् भूतभावनः ।।

---

१- पा०अ० ३।३।१३४

२- पा०अ० ३।३।११३

३- गीता १०।१५

४- पूर्वमीमांसा ३।१।१

पूतात्मा - ओं पूतात्मने नमः

आत्मत्वेऽपि संसारिवत् अस्य शरीरभूतचिद्चिद्दोषाननुषङ्गात् पूतात्मा शुद्धस्वभावः ।

परावरयोस्तुल्यत्वेऽपि शरीरसंबन्धे अवर एवात्माकर्मफलानि भुन्जानः क्लिश्यते ।

शंकरभाष्ये तु-

भूतकृदादिभिर्गुणतन्त्रत्वं प्राप्तं प्रतिषिध्यते पूतात्मा इति पूत आत्मा यस्य स पूतात्मा, कर्मधारयो वा 'केवलो निर्गुणश्च'[१] इति श्रुतेः ।

गुणोपरागः स्वेच्छतः पुरुषस्येति कल्प्यते ।

'जहात्येनां भुक्तभोगामजोऽन्यः'[२]

भोजयिता तु परः स्वातन्त्र्येण न भुंक्ते चकास्ति च परम्, यथा शिष्यशासित्रोरविशिष्टेऽपि कशास्पर्शे, कर्मकर्तृभावभेदेन शिष्य, एक एव कशया पीड्यते न शासिता विज्ञायते च ।

'अनश्नन्नन्योऽभिचाकशीति'[३]

---

१- श्वे०उ० ६।११

२- तै०ना० ६।१०।५

३- मु०उ० ३।१।१।

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते[1] ।।

"अत, सातत्यगमने" धातोः भ्वादि को०

ततोऽमनिणन्तोयम व्युत्पादितः इत्थमयमुत्तरत्रापि(पूतात्मेत्यादौ)

"पूञ् पावने" धातोः

"गत्यर्थाकर्मकश्लिष्शीङ्०स्था[2]

इत्यादिना कर्मकात् कर्तरिक्तः भवन्तिह्य विनदितकर्माणोऽप्य कर्माणः ।

निरुक्ति-

शरीरत्वाच्च जातः तद्दोषैर्न कदाचन ।
लिप्यते यः स पूतात्मा न मुंक्ते च फलानि यः ।।

---

१- गीता ४।१४

२- आदि ३।४।७२

परमात्मा च - ओं परमात्मने नमः

भाष्य-

यथा सर्वाणि भूतानि अननात्मवन्ति, नैवमयमन्येन केनचित्, अतः (परमात्मा) परो मा अस्येति परमः पृषोदरादित्वेन साधुत्वम् परमश्चासावात्माचेति, अनन्येश्वरः यथा-

"आत्मेश्वरम्"[१]

नापरं पुण्डरीकाक्षात् दृश्यते भरतर्षभ"
न दैवं केशवात्परम्"[२]

"मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय।
मयि सर्वमिदं प्रोक्तं सूत्रे मणिगणा इव"[३] ।।

"पृ पालनपूरणयोः" इति जुहोत्यादि

निरुक्ति-

येन भूतान्यात्मवन्ति नायमन्येन चात्मवान् ।
अतो ह्यात्मेश्वरत्वाच्च परमात्मा प्रकीर्तितः ।।

१- तैoनाo ६।११
२- माoआश्व २।२१
३- गीता ७।७

मुक्तानां परमागतिः - ओँ मुक्तानां परमागतये नमः

भाष्यम् -

एवं स्वशेषिणमेव परमप्राप्यमाह मुक्तानां परमागतिः प्रकृतिबन्धाविद्याकर्मसंस्काररुचिविपाकेभ्यः आवरणेभ्य एकान्ततो त्यन्ततश्च विश्लिष्टा मुक्ताः आम्नायते हि,

"तत्सुकृतदुष्कृते धूनुते तस्य प्रियाज्ञातयः सुकृतमुपयन्त्य प्रियादुष्कृतं तद्यथा रथेन"[1]।

मुक्तानां परमागतिः

गम्लृ गतौ धातौ

श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्यधूत्वाशरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामीत्यभिसंभवामीति[2]।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे[3] ।।

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते[4] ।।

---

१- कौषीतकि ब्राह्मणो० १।४

२- छान्दो० ८।१३।१

३- मु०उ० २।२।८

४- गीता ७।१४

भाष्यम् -

अत्र मुक्तानाम् इति बहुवचनेन, तेषां भेदो बहुत्वं च स्पष्टम् तथा

च -

"परामृतात्परिमुच्यन्ति सर्वे"[१]

(सादृश्य) (मुक्तानां गतिः) इत्युक्त्या भगवता च भेदः

तथा च-

जुष्टं यथा पश्यत्यन्यमीशमस्य महिमानमिति वीत शोकः"[२]

"भोक्ताभोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविध ब्रह्ममेतत्"[३]

"मुक्तोपसृप्यव्यपदेशाच्च"[४]

इत्यादि स्पष्टं च मोक्षधर्मे-

सहि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः

नलिप्यते मलैश्चापि पद्मपत्रमिवाम्भसा ।।

कर्मात्मात्वपरोयोसौ मोक्षबन्धैस्सयुज्यते ।

स सप्तदशकेनापि राशिना युज्यते तु सः ।।[५]

---

१- मु०उ० ३।२।६

२- मु०उ० ३।१।२

३- श्वे०उ० १।१२

४- ब्र०सू० १।३।२

५- महाभारत शा० ३५२।१४

अतस्तथ्येन मिथ्याभूतेन वोपाधिना कुम्भादिनेव नभोवच्छिन्नं ब्रह्मैव संसरति मुक्तौतु भेद एव नास्तीति मतम् ।

अभेदवादिनां तु मुक्तिविषयाभेदसाम्यवादाः भज्येरन्, औपाधिकभेदवादिनां च मुक्तस्वरूपभङ्गापगमात्, मुक्तेरपुरुषार्थत्वम्, भेदवादसामञ्जस्य च स्याताम् इदमेव साम्यं मुक्तावभेदो व्याख्यातः -

"तद्भावभावमापन्नस्तदासौ परमात्मना भवत्यभेदी"[1]

इति तस्य परस्य ब्रह्मणः भावाः ज्ञानशक्त्यादयः स्वभावाः तेषां भावः आविर्भावः गुणैस्सादृश्यम् अन्येषां द्वितीयो भावशब्दो व्यर्थः, मुक्ताभेद निर्णयश्च देवाद्युपाधिविषयो व्यञ्जितः ।

इत्यादिना - श्वेतद्वीपवासिनान्दिव्यरूपाद्युपेतत्वम् भगवदास्यपरिचरणैकप्रियत्वं च प्रपञ्च तदेवमुक्तानां लक्षणमुक्तम् ।

परमेति विशेषणेन मुक्तानामेव केषांचिदर्वाचीनागतिर्गम्यते गृह्यते निर्मुक्तजरामरणात्मककैवल्यलक्षणा -

"जरामरणमोक्षायमामाश्रित्ययतन्तिये इति"[2]

---

१- विष्णु०पु०६।७।९५

२- गी० ७।२९

एवं मुक्तानां परमागति:

"सा काष्ठा सा परागति:"[१]

"मामेवानुत्तमां गतिम्"[२]

अव्यय: - ओं अव्ययाय नम:

इदमेव पञ्चभिर्नामभिरुपपादयति न वीयते न व्यपाम्यते स्मा-दिति, (अव्यय:) एरच् एवं प्रत्यय: विनय: जय इत्येवमादय: नहि भगवान् कथंचित् संसारमहार्णवादुत्तीर्णं स्वचरणारविन्दं प्राप्तवन्तं पुनरा-वर्त्तयति अत एवाम्नासिषु: ।

"एतेन प्रतिपद्यमाना इमं मानवमावर्तन्नावर्तन्ते"
न च पुनरावर्तते, न च पुनरावर्तते"[३]
"अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्"[४]

यमस्मृतौ-

"सत्त्वं वहति सूक्ष्मत्वात्परं नारायणं प्रभुम् ।
परमात्मानमासाद्य परं वैकुण्ठमीश्वरम् ।।-

---

१- कठो०५

२- गी०७। १८

३- छा०उ०८। १५। १

४- ब्र०सू० ४। ४। ४।

अमृतत्वाय कल्पते न निवर्तेत वै पुन:
यति धर्मगतश्शान्त: सर्वभूतसमो वशी ।
प्राप्नोति परमं स्थानं यत्प्राप्य न निवर्तते[1] ।।

पुरुष: - ओं पुरुषाय नम:

पुरु बहु सनोतीति (पुरुष:) सनोते: दानकर्मण: ।

"अन्येष्वपि दृश्यते"[2] इति ड: "षणु दाने" धातो: मुक्तेभ्योऽपि वाङ्मनसा परिच्छेदनगुण विभवस्वानुभवम् ददाति हि भगवान्, यथा-

"दिव्येन चक्षुषा रममाण:"[3]

निरुक्ति-

मुक्तेभ्यस्स्वात्मपर्यन्तदानात् पुरुष: ईरित: ।

---

१- हारीत:

२- पा०अ० ३।२।१०१

३- छा०उ० ८।१२।३।

साक्षी- ओं साक्षिणे नमः

"रसो वै सः रसं ह्येवायं लब्ध्वा नन्दी भवति"[1]

"तद्धेतुव्यपदेशाच्च"[2] इति

एवं तानानन्दयन्, स्वयमपि तृप्यन साक्षात्करोतीति साक्षी ।

निरुक्ति-

स्वयमानन्दयन तृप्यन् साक्षी साक्षात्करोति सः

क्षेत्रज्ञो - ओं क्षेत्रज्ञाय नमः

साक्षाद्द्रष्टरि संज्ञायाम्[3] इति इनिः विशिनष्टि हि मुक्तप्राप्यम् ।

"ब्रह्मणा विपश्चिता"[4] इति

विविधं पश्यच्चित्वं हि विपश्चित्वम् ,

इत्थं तेभ्यः स्वानुभवं दातुं तदेकान्तं क्षेत्रं जानातीति क्षेत्रज्ञः ।

---

१- तै० ७।१

२- ब्र०सू० १।१।१५

३- पा०अ० ५।२।९१

४- तै०आ० १।१।२

"आतो नुपसर्गे कः"[1] इति कः स्वभोगसमृद्धि समुद्भवभूमित्वात्, क्षेत्रं परमव्योम्, तादृशशरीरत्वाद्वा, यथा-

"आकाशशरीरं ब्रह्म"[2]

"मुक्तानां तु गतिर्ब्रह्मन् क्षेत्रज्ञ इति कल्प्यते"[3]

तद्धि मुक्तानां भगवदनुभवस्थानम्,

अव्यक्तो क्षर इत्युक्तस्तमाहुः परमां गतिम्
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ।।[4]

"तन्मोक्षस्तत्परं तेजो विष्णोरिति विनिश्चयः"[5]

श्रीवाराहे शास्त्यम् प्रति भगवान् -

यमाहुः सर्वभूतानां प्रकृतिं ध्रुवाम् ।
अनादिनिधनं देवं प्रभुं नारायणं परम् ।[6]
ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते ।

---

१- ३।२।३ पा०सू०

२- तै० ६।२

३- मा०मो०

४- गीता

५- ब्रा०

६- मा०वा०प०

श्रीहरिवंशे वैदिकपुत्रानयने भगवान्,

ब्रह्मतेजोमयं दिव्यमाश्चर्यं दृष्टवानसि ।
अहं स भरतश्रेष्ठ मत्ते जस्तत्सनातनम् ।
प्रकृतिस्सा मम पराव्यक्ताव्यक्ता च भारत ।
तां प्रविश्य भवन्तीह मुक्ताभरतसत्तम् ।।
सा सांख्यानां गतिः पार्थ योगिनां च तपस्विनाम् ।
तत्परं परमं ब्रह्म सर्वं विभजते जगत्[१] ।।

"ज्ञा अवबोधने, दा, दाये, दा निवासगत्योः, धातोः

निरुक्ति-

क्षेत्रं तु परमव्योम मुक्तेभ्यो वेत्ति नित्यशः ।
दातुं स्वानुभवं यश्च क्षेत्रज्ञः स तु कथ्यते ।।

अक्षराय नमः - अक्षरः एव च

---

१- भा०हरि०

योगो - ओं योगाय नमः

अस्यैव निरुपाधिकमुक्त्युपायत्वमपि वक्ति, योगः युज्यते प्राप्यते अनेनेति

'अकर्तरि च कारके संज्ञायाम्'[1] इति घञ् एवम् अमोघः, सर्गः इत्यादीनि घञन्तानि सायुज्यस्यानन्यापेक्षः साक्षाद्धेतुरित्यर्थः।

निरुक्ति-

उक्तं हि मुक्तप्राप्यत्वमथोपायत्वमुच्यते ।
साक्षान्मोक्षैकहेतुत्वात् योग इत्यभिधीयते ।।

योगविदांनेता- ओं योगविदांनेत्रे नमः

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुचः।।[2]

इति व्यवहितोपायनिष्ठानामपि योगविदांनेता

नयतेस्तृच्,

भर्ता, धाता इत्यादयोऽपि तृजन्ताः फलपर्यन्तनिर्वाहकः

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि नचिरात्पार्थ मय्यावेशितचेतसाम् ।।[3]

---

१- पा०अ० ३।३।१९

२- गीता १८।६६

३- गीता १२।७

प्रधानपुरुषेश्वरः- ओं प्रधानपुरुषेश्वराय नमः

संसारपारंपरमीप्समानैराराधनीयो हरिरेक एव

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः।
ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥[1]

इदमेवोपपाद्यते प्रधानपुरुषेश्वरः
प्रधानस्य - बन्धहेतोः पुरुषाणां च
बध्यमानानां सर्वथा नियामकः

'स्थेशभास-[2] इत्यादिना वरच् एवं स्थावरः यथा,

'संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तंभरते विश्वमीशः।
अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥[3]

एवं ईश्वरो हि स्वमायया जीवानपराध्यते बन्धन, प्रपद्यमानांश्च मुञ्चन् क्रीडितुं प्रभवति,

'दैवो देवस्य क्रीडितः' संसार मोक्षस्थिति बन्धहेतुः'

'ईश ऐश्वर्ये धातो' 'पुर, अग्रगमने धातोः'

निरुक्ति-

बन्धहेतोः प्रधानस्य बध्यमाननृणां च यः
नियामकस्सर्वदा स प्रधानपुरुषेश्वरः ॥

---

१- मु०उ० ३।२।६

२- पा०अ० ३।२।१७५

३- श्वे०उ०१।८

नारसिंहवपुश- ओं नारसिंहवपुषे नमः

श्री विष्णुतत्त्वे

"पराभिध्यानात्तु तिरोहितम् ततो ह्यस्य बन्धविपर्ययौ"[1]

"देहयोगाद्वासोऽपि"[2]

इति च सूत्रे ताच्छील्यविषयेण वचा तत्त्वत्रयभेदः ईश्वरेशितव्यभावश्च अनौपाधिको ज्ञाप्यते, स्वभक्त्यन्तरायनिवारणमपि प्रदर्शयति नारसिंहवपुः ।

भक्तभयापहतदर्पदासमदाणप्रतिपन्नयथाकामदिव्यमहानृसिंहसंहननः

योरनः दीर्घः संहितायाम्, "आद्गुणः" स्वभक्त्यन्तरायनिवारणमपि प्रदर्शयते,नारसिंहं,नरसिंह संबन्धिवपुः शरीरम् अस्येति नारसिंहवपुः ।

"डुवप" बीज सन्ताने धातौ

निरुक्ति-

नरवत् सिंहवद्रूपं यो बिभर्त्यभयप्रदम् ।
यथाकामं तु भक्तानां नारसिंहवपुश्च सः ।।

---

१- ब्र०सू० ३।२।४

२- ब्र०सू० ३।२।५।

श्रीमान् - ओं श्रीमते नमः

अतः परस्परदुर्घटापूर्व विकृतरूप परिग्रहादपि(श्रीमान्) सौन्दर्यलावण्यादिभिरतिमनोहरदिव्यरूपः तत्र,नृसिंहत्वयोः सुघटितत्वम् पश्यताम्,शुद्धिमदन्यन्नृमात्रं सिंहमात्रं वा दृष्ट्वा जुगुप्सा जायेतापि तादृग्रूपपरिग्रहमात्रेणैव हि जगत् त्रातम् ।

'दंष्ट्राकरालं सुरभीतिनाशनं कृत्वावपुर्दिव्यनृसिंहरूपिणा। त्रातं जगद्येन' इति

'श्रिञ् सेवायां धातो'

शंकरभाष्य-

यस्य वक्षसि नित्यं वसति श्रीः स श्रीमान् ।

निरुक्ति-

विरुद्धाकारवत्त्वेऽपि (श्रीमान्) सर्वमनोहरः ।

केशवः - ओं केशवाय नमः

पुरुषोत्तमः- ओं पुरुषोत्तमाय नमः

एवंविधैश्वर्यसौन्दर्यकान्तलक्षणान्युपलक्षयति(केशवः)

प्रशस्तस्निग्धनीलकुटिल कुन्तलः

एवंविधसौन्दर्यैश्वर्योपलक्षका लक्ष्यन्ते,तत्र सौन्दर्योपलक्षकाः

प्रशस्ताः केशाः अस्य सन्ति अस्मिन्वेति(केशवः)

क्लिश,उपतापे, क्लिश,विबाधनेवा धातो

क्लिशेन् लोलोपश्च उणादिः

केशाद्वों न्यतरस्याम[1]

इति प्रशंसायां वः साक्षण्यप्रसक्त्या परमं वैलक्षण्यमाह

(पुरुषोत्तमः) अचेतयमाना व्यक्ताव्यक्तरूपा प्रकृतिः व्यावर्त्यते

(उत्) इत्युत्कृष्टवाचितया बद्धाः सामर्थ्यप्राप्तेन तरपा मुक्ताः (तम)

पा नित्यमुक्ताः सूरयोनन्तवैनतेयादयः इदं च तेभ्यो वैलक्षण्यम् अवधप्रति-

भटतया व्यापनभरणाद्युपकारैः स्वाम्येन च स्वभावत् एवोत्कर्षात्,इदं

हि बहुभिस्तात्पर्यलिङ्गैः परमं गुह्यमगोयत् ।

---

१- पा०अ० ५।२।१०६

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च,
क्षरः सर्वाणि भूतानि कूटस्थो क्षर उच्यते[1] ।।

"भूमिरापो नलो वायुः[2]"

इत्यादि वह्निदं परं दृष्टव्यम् अत्रापि भोक्तृभोग्यनियन्तृणामत्यन्तभेदस्स्पष्टः, अतः ब्रह्मपरिमाणपदार्थश्च प्रतिक्षिप्तः, ब्रह्मणः सर्वविकारस्य ब्रह्मसंसारस्येश्वरातिरिक्तब्रह्मसद्भावस्याव्यक्तमुक्तेश्वराणां ब्रह्मणिप्रलयोत्पादयोश्चाभ्युपगमो हि यथोक्तपुरुषोत्तमत्वेन सर्वेण वेदसिद्धान्तेन च विरुध्यते ।

निरुक्ति-

प्रशस्तनीलकेशत्वात् केशव: परिकीर्तितः ।
बद्धादिषुपुरुषोभ्यो यो ह्युत्कृष्टः पुरुषोत्तमः ।।

---

१- गीता १५।१६

२- गीता ७।४

सर्वः - ओं सर्वाय नमः

एवं सर्वनिर्व्यपेक्षाण्यनुपेक्षमाणः सर्वं स्वरूपस्थित्यादिभिः स्वनिर्वाह्य तया शरीरमिवात्मा नुसन्धत्ते अतः सर्वः सरतेः

"इण् शीभ्यावन् उणादिः
सर्वनिघृष्व उणादिः इत्यादिना सरत्यवयवानित्यर्थो
वन् प्रत्ययः सरतिः । गत्यर्थत्वादत्रबुध्यर्थः,
"असतश्च सतश्चैव सर्वस्य प्रभवाप्ययः ।
सर्वस्य च सदाज्ञानात्सर्वमेनं प्रचक्षते[१]
"येन सर्वमिदं प्रोतम्"[२]

निरुक्ति

चराचरशरीरेषु व्याप्तिमान् सर्व ईरितः ।

---

१- महा०उद्यो० ७०।११

२- तै०ना० ६।५०

शर्वः - ओं शर्वाय नमः

शिवम् - ओं शिवाय नमः

स्वशरीरभूतानाम् अशुभमपि शृणातीति - पूर्ववत्

शुभावहश्च शिवः शब्दि० शुभार्थत्वात्

"सर्वनिघृष्वरिष्वलष्वशिव" उणादि इत्यादिना वन प्रत्ययः, ह्रस्वत्वम्, गुणाभावश्च निपात्यते, यथा-

"मङ्गलं भगवान विष्णु मङ्गलम्
मङ्गलानां च मंगलम्"[1]

स्थाणु - ओं स्थाणवे नमः

"स्थिरत्वात् स्थाणुः"[2]
स्थाणुः तिष्ठते

"स्थाणुः" उणादि तृतीयपादे इति णुः हठानुग्रह इति भावः नहि भगवतः स्पर्शः प्रायश्चितादिसामान्यधर्मवत्, उपात्तदुरितलोपेण, कारीरी, चित्रा दर्शपूर्णमासादिवत्, देवतान्तरवत्, काम्यमानैक कामप्रदानेन वानृणां विरमति, प्रबलैर्वान्तरायैः प्रतिबध्यते हीयते अवह्रियते वा।

---

१- महाभा०बानु० १४६।१०

२- शंकरभाष्य

किन्तु अशेषमशिवं संशमय्य अखिलमभिलषितं च बहुमुखं विश्राण्यापि, न जातुचित् विश्राम्यति यथा-

"रत्नपर्वमारुह्य यथारत्नं नरोमुने ।
सत्त्वानुरूपमादत्ते यथा कृष्णान्मनोरथान् ।।"[1]

"एको बहूनां यो विदधाति कामान्"[2]

निरुक्ति-

स्वयं न विश्राम्यति यः स स्थाणुः परिकीर्तितः ।

भूतादि - ओं भूतादये नमः

"अपि च, स्पृहणीयतमत्वात् भूतैरुपादीयते इति-भूतादिः

"उपसर्गघोः किः"[3] एवं सर्वादिनिधि इत्यादयः

"किं प्रजया करिष्यामो येषां नोऽयमात्मा"[4]

"उपबृंह्यते च" इत्यादिभिः ।

---

१- वि०ध०७।३

२- श्वे०उ० ६।१३

३- पा०अ० ३।३।९२

४- बृ०उ० ४।४।२२

निधिरव्यय: - ओं अव्ययाय निधये नम:

अत: निधिरव्यय: महालोभेनापह्नवन्निधेयत्वात् यथा च, तद्यथा हिरण्यनिधिं निहितम्[1] इत्यादि सर्वदा सर्वथोपजीव्यमानत्वे पि कल्यापि अनुपक्षयात् (अव्यय:) निधिविशेषणमेतत् न स्वतन्त्रं नाम, अन्यथा अव्यय:, पुरुष: इति पौनरुक्त्यात् ।

भावनो- ओं भावनाय नम:

भर्ता- ओं भर्त्रे नम:

प्रभव:- ओं प्रभवाय नम:

भावन: यथा-

परित्राणाय साधूनां विनाशाय च दुष्कृताम्[2]
धर्मसंस्थापनार्थाय संभवामि युगे युगे ।।

किंच तानात्मदानेन तच्छील: पुष्णातीति - (भर्ता)

अयम् अस्य भव: प्रकृष्ट: इति (प्रभव:)

प्रकर्षश्च जन्मन: अनाघ्रातदोषगन्धत्वेन, स्ववेदनमात्रेण सकल-जन्मनिगलनिर्मूलनहेतुत्वेन च देवादिजन्मवैजात्यात् यथा-

---

१- छा०उ० ८।३।२।

२- गीता ४।८।

निरुक्ति-

जनित्वोज्जीवयति यो जनान् स्यात् भावन स्तु सः ।
यस्तान् पुष्णात्यात्मदानात् स भवो परिकीर्तितः ।
दैवादिजनवैजात्यात् प्रकृष्टोत्पत्तिमत्त्वतः
अविद्यादोषवैधुर्यात् प्रभवः परिकीर्तितः ।।

प्रभु - ओं प्रभवे नमः

"अजायमानः"[1]

"तस्य धीराः परिजानन्ति योनिम्"[2]

"नैषगर्भत्वमापेदे न योन्यामवसत्प्रभुः ।
आत्मनस्तेजसाकृष्णः सर्वेषां कुरुते गतिम् ।।[3]

एवममन्दपरतन्त्रमनुष्यादिसाम्येनावतरन्नपि प्रभुः भवतेः

"भू" सत्तायाम् प्रपूर्वः "विप्रसंभ्यः- -" इति बाहुलकात्[4]
संज्ञायामपि डुरिति प्रागप्युक्तमेव डित्त्वाट्टिलोप इत्यादि ।

---

१- पु०सू० २१

२- पु०सू० २१

३- महा०सभा० ६२।३५

४- पा०अ० ३।२।१८०

निरुक्ति-

बृह्मादीनां च सर्वेषां भोगमोक्षसमर्पणे ।
समर्थः प्रभु रित्युक्तः सर्वेष्टफलदो मनुः ।।

ईश्वरः - ओं ईश्वराय नमः

अतः पारमेष्ठ्यादि जन्मस्वधिकतमप्रयोजनैश्वर्यात्
ईश्वरः यथा

तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप
अजो पि सन्नव्ययात्मा भूतानामोश्वरो पि सन्[१] ।।

जन्मसु पारमेष्ठ्यादपि अधिकतम प्रयोजनैश्वर्यवत्त्या इति ईश्वरः।

"ईश ऐश्वर्ये धातोः"
"स्थेशभास"[२] इत्यादिना वरच्, नेट ईश्वरः

निरुक्ति-

मनुष्यावतारे पि बृह्मादोंश्च प्रयोजने
नियन्ता(त्वोश्वरः)प्रोक्तः प्राधान्यफलदोमनुः ।।

---

१- गीता ४।६।
२- पा०अ० ३।२।१७५

स्वयंभूश्च - ओं स्वयंभुवे नमः

कुतः इदं सर्वं वैभवम् ? यतः स्वयंभूः

"भुवः संज्ञान्तरयोः"[1] इति क्विप् स्वलीलादिप्रयोजनाय स्वेच्छया स्वासाधारणीम् परमसत्त्वमयीं प्रकृतिमेव सुरनर सजातीयसन्निवेशामधिष्ठाय, स्वयमेव भवतीति: न चतुर्मुखादिवत् ईश्वरान्तरेण कर्मादिभिर्वा परवत्त्येत्यर्थः यथा-

स्वयंभू ब्रह्मपरमं क्वीनाम्
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥[2]

निरुक्ति-

भवति स्वेच्छया योऽसौ स्वयंभूः परिकीर्तितः ।

---

१- पा०अ० ३।२।१७९

२- गीता ४।६।

शम्भु - ओं शंभवे नमः

स्वसौन्दर्यसौशील्यादिगुणाविष्कारेण, शं-सुखं भवति शंभुः

प्राग्वतघातुः -

"डुप्रकरणे मितद्वादिभ्यउपसंख्यानम्"[1] इति डुः यथा,

"रूपौदार्यगुणैः पुंसां दृष्टिचित्तापहारिणाम्"[2] इत्यादिभि-

निरुक्ति-

सौन्दर्यादिगुणानां यो ह्याविष्कारेण शं सुखं पुंसां सम्यग्भावयति

स शंभुः परिकीर्त्यते ।

रादित्य- ओं आदित्याय नमः

अथैणां प्रादुर्भावानामुदाहरणं पूष्णिपुरुषमाह आदित्यः

आदित्यो अस्य निवास इति ।

"दित्यदित्यादित्य"[3] इत्यादिना ण्यः एवं हि ब्रह्ममीमांसितम् ,

"अन्तस्तद्धर्मोपदेशात्"[4] इति

"ध्येयः सदा सवितृमण्डलमध्यवर्ती" इत्युदाहृत्यआदित्यान्तरस्य

तस्य यथाकप्यासं पुण्डरीकमेवमक्षिणी"[5] इत्याम्नात् ।

१- पा०अ० ३।२।१८०
२- रा०अ० ३।२६
३- पा०अ० ४।१।८५
४- ब्र०सू० १।१।२१
५- छा०उ० १।६।७

पुष्कराक्षा- ओं पुष्कराक्षाय नमः

सर्वैश्वर्यासाधारणलक्षणं पुण्डरीकाक्षत्वं संगमयति पुष्कराक्षः

"अक्ष्णो दर्शनात्"[१] इत्यत्र समासान्त

पुष्पकरं- पुण्डरीकम् अर्थात् तद्वत् अक्षिणी अस्येति पुष्कराक्षः

निरुक्ति-

अक्षिणी पुण्डरीकें व भक्तानुग्रहकारिणी ।
यस्यासौ पुष्कराक्षः स्यादष्टवर्णस्तु पावकः ।।

महास्वनः - ओं महास्वनाय नमः

तस्यैव चिह्नान्तरं च सूचयति -महास्वनः

महान्- पूज्यः स्वन शब्दः यस्येति, "आन्महतः"[२] इत्यादिना आत्वम् आमनन्ति हि, "तस्योदितिनाम"[३] इति तस्यैतस्य नामरुपं सशब्दम् ।

इति त्रयीरुपं वा पूज्यतमं सावित्रीप्रतिपाद्यतया वा अतो हि मोदावर्मेण ।

"विद्यासहायवन्तं माम् आदित्यस्थं सनातनम्"[४]

---

१- पा०उ० ५।४।७६

२- पा०उ० ६।३।४६

३- छा०उ० १।६।७

४- भा०मो०

निरुक्ति-

महान् पूज्यस्त्रयीरूपः स्वनो यस्य महास्वनः

अनादिनिधनो- ओं अनादिनिधनाय नमः

एतद्दिव्यनामरूपविशिष्ट एव- अनादिनिधनः । नित्ययौवनतया जनिजरादिदुरितदूरनित्यविग्रहः नतत्स्वरूपनित्यत्व परमेतत्, तस्य चतुर्मुखादीनामपि तुल्यत्वात्,

"आदिनिधने आधन्तौ अस्येति अनादिनिधनः

"आदित्यवर्णं तमसः परस्तात्"[1]

"रुक्माभं स्वमधीगम्यं विद्यात्तु पुरुषं परम्"[2]

निरुक्ति-

यस्यादिनिधनं नास्ति अनादिनिधनश्च सः
अनादिनिधनोपास्यो नित्ययौवनविग्रहः ।

---

१- पु०सू० २०

२- मनुस्मृति १२।१२८

घाता- ओं धात्रे नमः

कारणत्वेनापि ब्रह्मादिभ्यो वैलक्षण्यमाह (धाता)तृन् एवं भर्ता इत्यादयः ।

अनिरुद्धस्वरूपः,सर्वयोनावचित्समष्टिभूतायां प्रकृतौ चित्समष्टिभूतं विरिन्चात्मकं गर्भं दधातीति, यथा-

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।[1]
संभवः सर्वभूतानां ततो भवति भारत ।।

मौत्संहितायाम्-

'धाता दोत्रे कर्मबीजभूतं गर्भं दधाति' इति

निर्वचन्-

कारणत्वेनापि ब्रह्मादिभ्यो वैलक्षण्यमुच्यते,अचित्समष्टिभूतायां प्रकृतौ, चित्समष्टिभूतं विरिन्चाख्यं गर्भं दधातीति धाता ।

विधाता- ओं विधात्रे नमः

तं गर्भं परिणमय्य आविर्भावयतीति च विधाता

'यो ब्रह्माणं विदधाति पूर्वम्[2]' इति

---

१- गीता १४। ३

२- श्वे०उ० ६। १८

"तस्माद् विराडजायत"[1]

"डुधाञ्‌ धारणपोषणयोः" धातो जुहोत्यादिः

तृन्नादि अनिट्

तं गर्भं परिणमय्य विदधाति आविर्भावयतीति च विधाता पूर्ववत् धातुः विपूर्वः तद्वत् तृन्नादि

निरुक्ति-

तद्गर्भपरिणामे स्यादाविर्भावयिता स्वयम् ।
धारणाल्लील्या यस्मात् विधाता यं प्रकीर्तितः ।

धातुरुत्तमः - ओं धातुरुत्तमाय नमः

अतः धातु- स्रष्टुः उत्तमः उत्कृष्टतमः किंपुनस्तत्सृष्टेभ्य इति धातुरुत्तमः उच्छब्दात् उत्कृष्टवाचिन आतिशायनिकस्तमप्, चत्वम् , दण्डापूपिकया तत्सृष्टेभ्यः प्रजापतिप्रभृतिभ्यश्च, यथा-

"तत्त्वं नारायणः परः"[2]

परो नारायणो देवः तस्माज्जातश्चतुर्मुखः" वाराहे इत्यादि ब्रह्मरुद्रसंवादयज्ञाग्रहरणादाविदम् स्पष्टम् -

निरुक्ति-

यो वैस्याद्धातुरुत्कृष्टः स च स्यात् धातुरुत्तमः ।

१- पु०सू० ५

२- तै० ६।११

अप्रेमयो - ओं अप्रमेयाय नमः

तेषां करणैः प्रमातुमशक्यः अप्रमेयः

"इंधिति"[1] इति इकारः यथा-

"यं नायं भगवान ब्रह्मा जानाति पुरुषोत्तमम्"

स्वयं च ब्रह्मा -

तवान्तरात्मा मम चाये चान्ये देहिसंज्ञिताः ।
सर्वेषां सादिभूतोसौ न ग्राह्यः केनचित्क्वचित्[2] ।

इति अतीन्द्रियत्वात्, अकृत्स्नग्रहणत्वाच्च अप्रमेयत्वमेष्वेव वचनेषु स्फुटम् ।

हृषीकेशः - ओं हृषीकेशाय नमः

तत्करणानामपि नियामकत्वात् हृषीकेशः यथा, श्रीहरिवंशे-
"हृषोत्सौख्यात् सुखैश्वर्यात् हृषीकेशत्वमश्नुते" इति वा

निरुक्ति-

इन्द्रियाणां नियन्तृत्वात् हृषीकेशः प्रकीर्तितः ।

---

१- पा०उ० ६। ४। ६५
२- महाभा०मो० १७६। ४

पद्मनाभो - ओं पद्मनाभाय नमः

उक्तं हि सर्वं व्यनक्ति पद्मनाभः, पद्मनाभः प्रभवः पद्मो नाभावस्येति ।

"अच्प्रत्यन्ववपूर्वात्"[1] इत्यत्र योगविभागात् अच् यथा -

"घातोत्तानः संविशति पञ्चवर्षशतानि तु"

"धातुर्नाभ्यां पुष्करं प्रादुर्भवति पुष्करं पुण्डरीकं च पद्मं चकामित्येष कालः"

निरुक्ति-

कालात्मकं तु यत्पद्मं नाभौ यस्य स उच्यते,
पद्मनाभश्चाष्टवर्णो महासन्तानदो मनुः ।।

अमरप्रभुः - ओं अमरप्रभवे नमः

अमराणां सृष्ट्याद्यधिकारदानेन निर्वाहकश्च अमरप्रभुः

महाभारते-

एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ ।
तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ।।[2]

---

१- पा०अ० ५।४।७५

२- भा०मो० ३६६।१९

विश्वकर्मा - ओं विश्वकर्मणे नमः

ब्रह्मसृष्टेः प्राक् ऊर्ध्वं च विद्यमानं विश्वं कर्म जगद्व्यापारोऽस्यैवेति

यथा- "विश्वकर्मणस्समवर्ततताधि"[1]

"विश्वकर्मसूक्ते स्पष्टं द्रष्टव्यमिति, विश्वकर्मत्वं च ।

"आत्मा वा इदमेक एवाग्र आसीनान्यत्किंचन मिषत् ।स ईक्षत् लोकान्नुसृजा इति ।[2]

"स सिसृक्षुः सहस्रांशादसृजत पुरुषं द्विधा"

"कामाच्च नानुमानापेक्षा"[3]

निरुक्ति-

विश्वस्य जगतः कर्म व्यापारो यस्य लक्षणम् ।
प्राक् ब्रह्मसृष्टेरूर्ध्वं च विश्वकर्मेति कथ्यते ।।

---

१- पु०सू० १६
२- ऐतरे० १।१
३- ब्र०सू० १।१।१८

मनुः - ओं मनवे नमः

त्वष्टाः-ओं त्वष्ट्रे नमः

प्रसिद्धात् संकल्पलवमात्रात् मननादेवेति मनुः ।

"मन,ज्ञाने" धातो दिवादि"

"शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्य उः" उणादि प्रथम पादः ।

एवं निर्मितं नामरूपव्याकरणेन सुरनरादिवैचित्र्य विभक्तं व्यनक्तिः,अतः त्वष्टा त्वदातेस्तनूकरणकर्मणस्तृच् ।

"स्कोस्संयोगाद्योरन्ते च"[1] इति ककारलोपः तनूकरणं व्यक्तावयवीकरणम् त्विषेर्वा दीप्तिकर्मणः ।तृन्,उपधायाः अत्वं च निपात्यते ।

"त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वम् च"[2] इति वा निपातः दीपनं प्रकाशनम्,अवयवोन्मीलनमित्यर्थे यथा-

"नामरुपभूतानां कृत्यानां च प्रपञ्चनम्"[3] इत्यादि

"सर्वाणि रुपाणि विचित्यधीरः"[4]

निरुक्ति-

संकल्पलवमात्राच्च मननात् मनु रुच्यते ।

नामरुपव्याकरणात् त्वष्टा सृष्टस्य गद्यते ।

---

१- पा०अ०८।२।२९
२- पा०अ०३।२।१३५
३- वि०पु० १।५।६३
४- पु०सू० १६

स्थविष्ठः - ओं स्थविष्ठाय नमः

स्थूलतमः स्थूलशब्दात् इष्ठन् "स्थूलदूर"[1] इत्यादिना यणादिलोपः पूर्वस्य च गुणः ।

सो कामयत् बहुस्यां प्रजायेयेति[2]।

इति यथासंकल्पं बहूभवन्, सूक्ष्माव्यक्तसमष्टिकारणपर्वणो भोक्तृ-रनसुरतिर्यक्स्थावरकरणकलेवरतद्गोचरशब्दस्पर्शादितदास्पद चतुर्दशभुवन-ब्रह्माण्डतदावरणरूपस्थूलव्यक्तव्यष्टिकार्यविस्तारवान् जायत इत्यर्थः यथा-

तेषामेवानुकम्पार्थमहमज्ञानजं तमः
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता[3] ।।

स्थविरो - ओं स्थविराय नमः

संकल्पमूलत्वेऽपि लौकिकमृदादिकारण वैलक्षण्यं विवक्षति स्थविरः तिष्ठतेः ।

"अजिरशिशिर" उणादिप्रथमपादः इत्यादिना किरच् प्रत्ययः, हृस्वत्वं तुगागमश्च निपात्यते, सकलं कालं स्थानुः लील्या कालमपेक्षमाणोऽपि अतत्तन्त्रः अनेन कालविशेषापेक्षपरिणामदुग्घदध्यादिवैलक्षण्यं विवक्षितम् कालस्यापि सर्वात्मना तादधीन्यात्, यथा-

---

१- पा०अ० ६।४।१५६

२- तै०ब्र० ६ अनुवाकः

३- गीता १०।११

कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च ।
ईशिता भगवानेकः सत्यमेतद्ब्रवीमि ते ।।

कालचक्रं जगच्चक्रं युगचक्रं च केशवः
आत्मयोगेन भगवान् परिवर्तयते निशम् ।।

निरुक्ति-

कालातन्त्रतया दुग्धदध्यादिभ्यो विलक्षणः ।
विद्यते यस्सर्वकालं स्थविरः परिकीर्तितः ।

ध्रुवः - ओं ध्रुवाय नमः

अनन्तपरिणामादप्यविकृर्वाणतया स्वरूपादप्रच्याव्यःध्रुवः ।

"ध्रु, गतिस्थैर्ययोः" धातु

"नुदादिभ्यो णित्कौ, इति कः एवं गुहः वृषः निमिषः इत्यादयोऽपि कप्रत्ययान्ताः यथा-

"अजय्यश्शाश्वतो ध्रुवः"

"अविकाराय शुद्धाय"[1]

---

१- वि०पु० १।२।१

निरुक्ति-

"अप्रच्याव्यस्वरूपात् सदा यो सो ध्रुव: स्मृत:"

अग्राह्यश् - ओं अग्राह्याय नम:

मृतन्त्वादिभि कुलालकुविन्दादिना अनधिष्ठेय: अग्राह्य:

"ऋहलोर्ण्यत्"[१] इति ण्यदन्त: एवं वेध: मान्यं इत्यादयो पि

यथा-

यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं सं च विचैति सर्वम्[२]।

निरुक्ति-

अग्राह्यो यो नधिष्ठेयो मृत्तिर्केव कुडालकै:"

शाश्वत: - ओं शाश्वताय नम:

शाश्वत: अनवरतजाद्यापारप्रवाहत्वेन नित्य: यथा,

"अव्युच्छिन्नास्तस्त्वेते सर्गस्थित्यन्तसंयमा:"[३]

---

१- पा०अ० ३।१।१२४

२- श्वे०उ० ४।११

३- वि०पु० १।२।२६

कृष्णो - ओं कृष्णाय नमः

लोहिताक्षः - ओं लोहिताक्षाय नमः

विषलीलारसेन नितान्तनिर्वृतः कृष्णः आर्षनिरुक्तम् -

"कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः ।
कृष्णस्तद्भावयोगाच्च इति -[1]

इहह० निर्वृतिपिशुनरम्यराजीवताम्रनयनः लोहिताक्षः

निरुक्ति-

रक्तराजीवनयनो लोहिताक्षः प्रकीर्तितः ।

प्रतर्दनः - ओं प्रतर्दनाय नमः

प्रभूतम् - ओं प्रभूताय नमः

सर्वेषां संहर्तृत्वं चाह- प्रतर्दनः तर्हि: हिंसाकर्मा यथा -

"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः"[2]

"अत्ता चराचरग्रहणात्"[3] इति

---

१- महा०उ० ६६।५

२- कठोपनि० २।२४

३- ब्र०सू० १।२।९

सर्वसंहारेऽपि-

प्रभूत: समृद्ध: नित्यनिर्मर्यादिभोगोपकरणपरमपदत्वात्,
तत्र परमाणुमात्रं हि सृष्टिसंहारगोचरमिदं विश्वम् तदेतत् स्पष्टयति-

निरुक्ति-

भोगोपकरणं नित्यं निर्मर्यादं परं पदम् ।
यस्य तेन समृद्धत्वात् प्रभूत इति कथ्यते ।।

त्रिककुद्धाम् -

त्रिककुद्धामा इति त्रिककुब्धामा इति केचित् । उभयथापि
अवयवा लक्ष्यन्ते त्रिककुप् त्रिपाद्विभूतिलक्षणं, परमं धाम यस्य स:
त्रिककुद्धामा आम्नायते हि ।

"पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि"[1] इति त्रिपाद्
पाद: इति परममहत्वपरमाणुपरिमाणौ व्याख्यातौ -

तथैवासं त्रिककुदो वाराहं रूपमास्थित: ।
त्रिककुत् तेन विख्यातश्शरीरस्य प्रमापणात्"[2] इति

अस्मिन् पक्षे, धाम इति नामान्तरम्, ज्योतिरिति चार्थ: ।

निरुक्ति-

त्रिपाद्विभूतिस्त्रिककुत् सैवस्थानं विशेषत: यस्य स त्रिककुद्धामा ।

---

१- पु०सू०

२- महाभा०मो० ३४२-९३

पवित्रम् - ओं पवित्राय नमः

मङ्गलं परम् - ओं परस्मै मङ्गलाय नमः

ईदृक्गुण विभवरूपकसोपानेन तन्निरूप्यम् स्वरूपमनुप्रविशति-

पवित्रम् पुर्वः

"अशित्रादिभ्यइत्रोत्रौ" इतीत्रप्रत्ययः उणादि

"कर्तरि चर्षिदेवतयोः[1]" इति वा

निरुक्ति-

गुणस्य विभवानां च रुपस्य च निरन्तरम् ।
निरुपकस्य सर्वैश्च तन्निरुप्यम् स्वरुपकम् ।
अनुप्रविश्य वसति तत् पवित्र मिति स्मृतम् ।।

समस्तहेयप्रत्यनीकं मंगलपरम्

"मङ्गिगर्त्यर्थः "मङ्गेरचल च्" उणादि

स्वयं प्रमानन्दतया कल्याणैकतानम् परम् इति आनन्त्यपरम्

सत्यपि नैसर्गिक नित्यनिरवधिकनिस्सीमनिस्संख्यस्वगुण विभवानुभववैभवे-

सदातने, स्वतएव अशेषदोषपरिपन्थिशान्तानन्तानुपमानकूलतमस्वयं -

प्रमात्मानुभवनिबन्धननिरङ्कुशानन्दन्यक्कृत निरस्तरङ्गस्तिमितामृतमहोदधि-

न्यायया परावस्थयैव सर्वनिरपेक्षो नित्यतृप्तश्चेति, शक्यनिरुपणो भगवान्

न्यरुपि च।

---

१- पा०अ० ३।२।१८६

"आनन्दमयोऽभ्यासात्"[१]

"आनन्दादय: प्रधानस्य"[२]

इत्यादौ अवादि च,

"आनन्दो ब्रह्म"[३]

निरुक्ति-

सर्वहेयप्रत्यनीकमनन्तानन्द लक्षणम् ।
वेदान्तपारगं नित्यमुच्यते मंगलंपरम् ।।

ईशान: - ओं ईशानाय नम:

निमीलदुन्मीलदीदृशस्वरूपेभ्यो बद्धमुक्तनित्येभ्यो स्यव्यावृत्ति: कीर्त्यते ईशान: ।

"ताच्छील्य"[४] इत्यादिना चानश् सर्वावस्थस्वपरसमस्तवस्तुव्यवस्थापनस्वभाव इत्यर्थ: यथा-

"तमीश्वराणां परमम्महेश्वरम्"[५]

"सहीशो स्य जगतो नित्यमेव नान्यो हेतुर्विद्यते ईशनाय"[६]

---

१- ब्र०सू० १।१।१३

२- ब्र०सू० ३।३।११

३- तै०भृ० ६।२

४- पा०अ० ३।२।१२९

५- श्वे०उ०६।७

६- श्वे०उ०६-१७

"स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा"[1]

निरुक्ति-

सर्वावस्थासु सर्वेषां व्यवस्थापनशीलतः ।
वस्तूनां भगवान् साक्षात् ईशानः परिकीर्तितः ।।

प्राणदः - ओं प्राणदाय नमः

अस्यैश्वर्यस्य प्रथमं विषयं विवक्षति- प्राणदः

प्राणं ददातीति कः सूरिभ्यस्सदा दर्शनरूपस्वानुभवपरिचरणानुकूलबलद् इति भावः यथा-

"य आत्मदाबलदा"[2]

निरुक्ति-

सूरिभ्यः परिचर्यादौ बलदः प्राणदः स्मृतः

---

१- बृ०उ० ४।५।१५
२-का० १ पु०अ० ८

प्राणो - ओं प्राणाय नमः

तेणाम् - प्राणः उज्जीवनहेतुश्च, यथा

"प्राणस्याधानुगमात्"[1]

अत्रोभयत्र निपुणोन्नेयान्युदाहरणानि-

"अथैनमेते देवाः प्राणा अमृता आविशन्ति"

"तदेतदक्षरं ब्रह्म सप्राणस्तदुवाङ्मनः"[2]

निरुक्ति-

उज्जीवनस्य हेतुत्वात् नराणां प्राण ईरितः

ज्येष्ठः - ओं ज्येष्ठाय नमः

ज्येष्ठः (प्रशस्यशब्दादिष्ठनि)

"ज्यच"[3] इति ज्यादेशः स्वैन सूरिभिश्च सर्वदा सर्वथानुभावेऽपि

अदृष्टपारमहाविभूतित्वेन प्रशस्यतमः यथा-

"भगवान् वासुदेवो ज्यायसी विभूतिः" इति

निरुक्ति-

सर्वदानुभवेऽप्येतैरदृष्टापारभूतितः ज्येष्ठः

---

१- ब्र०सू० २।१।२६  ३- पा०अ० ५।३।६१

२- मु०उ० २।२।२

श्रेष्ठ: - ओं श्रेष्ठाय नम:

तैस्सदानुभवप्रीत्या स्तोत्रैः परिचर्यमाण: श्रेष्ठ:

निरुक्ति-

श्रेष्ठश्च तैर्नित्यं स्तुतत्वादभिधीयते ।

प्रजापतये नम: - प्रजापति:

बद्धमुक्तेभ्य: प्रकृष्टतया जायन्ते भवन्तीति प्रजा:, सूरय: यथा

"यमन्तस्समुद्रे कवयो वयन्ति तदक्षरे परमे प्रजा:"[1]

"अधिरीश्वरे"[2]

"यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी"[3]

"सदा पश्यन्ति सूरय:"[4]

---

१- तै०उ० ६।१।३

२- पा०अ० १।४।९७

३- पा०अ० २।३।९

४- पु०सू० १४

"मध्ये वामनमासीनं विश्वेदेवा उपासते"[1]

इत्यादिभि: श्रूयमाणा: - तेषां पति: स्वामी नित्यपरिचरणीय: उचितेन देशेन विशिनष्टि: -

निरुक्ति-

बद्धादुत्कृष्टतो ये च जायन्ते सूरय: प्रजा:
तेषां यो नित्यसूरीणाम् पतिस्स स्यात् प्रजापति: ।

हिरण्यगर्भो - ओं हिरण्यगर्भाय नम:

निर्दोषनिरघनित्यपरसत्त्वात्मकद्रव्यविशेषत्वेन हिरण्यसाम्यात् हितं, रमणीयमिति वा (हिरण्यम्) परमं धाम तस्य गर्भभूत: तत्र नित्यवासात् तद्विषये हि श्रूयते -

"हिरण्मये परे लोके विरजं ब्रह्मनिष्कलम् ।
तच्छुभ्रं ज्योतिषां न तत्र सूर्योभाति"[2] इत्यादि

निरुक्ति-

हिरण्यं परमं धाम हिरण्यस्य समानत:
हिरण्यगर्भ: स प्रोक्तस्तस्मिन् वसति यस्सदा ।।

---

१- कठो० २।५।२

२- मुण्ड० २।२।१०

भूगर्भो   माधवी

भू: - भूमि: भगवती ह्रीदामाथपरपर्याया, सदानुभवेन भरणीया गर्भभूता स्येति आमनन्ति हि ताम्

"महीं देवीं विष्णुपत्नीमजूर्याम्"[१]

निरुक्ति-

यस्य भूर्भरणीयाभूत् (भूगर्भो) नुभवेन स: ।

माधव:

माया: श्रिय: धव:- स्वामी श्रिय: पति: यथा,

"अस्येशाना जगतो विष्णुपत्नी"[२]

"ह्रीश्च ते लक्ष्मीश्च पत्न्यौ"[३]

"काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्"[४]

निरुक्ति-

श्रिय: श्रद्धादिनाम्नाश्च पतिर् (माधव) इस्यते ।

---

१- ३ अष्ट० १ प्र० २ अ०

२- नीला०सू०

३- पु०सू०

४- रा०बा० ४।७।

मधुसूदनः - ओं मधुसूदनाय नमः

सर्वनिर्वाहकत्वात् असुरनिरसनादिना निष्प्रतिपदालक्ष्मीकत्वाच्च मधुम् - असुरं सूदते सूदयति हन्तीति वा- आर्षनिरुक्तानुसारात्,

मधुम् - इन्द्रियं सूरिजनकरणं सूदते सूदयति आत्मन्युपसंहरतीति वा मधुसूदनः ।

नन्द्यादित्वाल्ल्युः एवं नन्दनः वर्धनः

"सर्वतत्वनयनाच्चैव मधुहा मधुसूदनः भारते[1]

निरुक्ति-

मध्वाख्यमसुरं हन्ति सूरीणां करणं च वा ।
उपसंहरति स्वस्मिन् मधुसूदन इष्यते ।।

ईश्वरो

पूर्ववत् ।

---

१- उ० ६६।४।

विक्रमी - ओं विक्रमिणे नमः

इच्छाप्रतिहन्तृप्रसवित परिपन्थिस्वभावतया, विक्रमः पौरुषम् अस्यास्ति अस्मिन्वेति विक्रमी ।

भूप्रशंसानित्ययोगाद्यर्थ इनिः यथा,

निरुक्ति-

विक्रमः पौरुषं प्रोक्तः तद्वत्त्वात् विक्रमी बुधैः ।

धन्वी - ओं धन्विने नमः

ईदृशनिरातिशयपौरुषानुरुपं दिव्यं सर्वदिव्यायुधोपलक्षकं शाङ्र्गधनुः धन्व वा शरासनं नित्यमस्यास्तीति- धन्वी आद्यकल्पे।

"शाङ्र्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः ।
अजितः खड्गधृग्विष्णुः कृष्णश्चैव बृहद्बलः"[1] ।।

निरुक्ति-

पौरुषानुगुणं शाङ्र्गं यस्य धन्वी स कथ्यते ।

---

१- रा०यु० १२०।१५

मेधावी - ओं मेधाविने नमः

निस्सीमनित्यभूमानुगुणसहजसार्वज्ञलक्षणा मेधा नित्यमस्यास्तीति मेधावी ।

विक्रमः - ओं विक्रमाय नमः

विना पात्त्रगपतिना त्रयीमयेन, क्रमणं तत्र तत्र स्वेच्छाविहारगतागतम् अस्येति विक्रमः ।

तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि ।
तन्नो गरुडः प्रचोदयात्[१]

निरुक्ति-

गमनं पक्षिराजेन यस्य विक्रम उच्यते ।

---

१- तै०उ०

क्रम: - ओं क्रमाय नम:

अनुत्तमः - ओं अनुत्तमाय नम:

ईदृश्या नित्यविभूत्या, क्रमते- स्फीतो भवतीति क्रम: क्रमिरात्मनेपदित्वात् तायनार्थ: तायनं - स्फीतता,

निरुक्ति-

क्रमणात् क्रमहेतुत्वात् (क्रम) एव उदाहृत: ।

निरभ्याधिकतया, नास्त्युत्तम: अस्मादिति अनुत्तम: उच्छब्दादुत्कृष्टवाचिन: आतिशायनिकस्तमप्, चत्वम् नञ्पूर्वो बहुव्रीहि: नञो नलोपे नुट् -

"परं ह्यपरमेतस्मात् विश्वरूपान्न विद्यते"
मत्त: परतरं नान्यत् किञ्चिदस्ति धनञ्जय"[1]

निरुक्ति-

उत्तमो नास्ति यस्मात् स अनुत्तम् उदाहृत: ।

---

१- गीता ७।७

दुराधर्ष- ओं दुराधर्षाय नमः

गम्भीयातिशयेन अम्भोधिवत् अनभिभवनीयतया आधर्षितुं-प्रधर्षितुमशक्यः अदाम्भ्य इति दुराधर्षः ।

"मनोमयः प्राणशरीरो भारूपस्सत्यसंकल्पः आकाशात्मा सर्वकर्मा सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तो वाक्यनादरः"[1] इति

"गम्भीर परमो देवः"

"महोदधिमिवादाम्भ्यम्"

तदनेन प्रपदृकेन-

"तद्विष्णोः परमं पदम्"[2]
स्वर्गलोकमागच्छ गतज्वरश्चिरम्"[3]

वैकुण्ठो तु परे लोके श्रिया सार्धं जगत्पतिः ।
आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैस्सह"
पुराणे वायुप्रोक्तशैव श्रीविष्णुतत्वे ।

निरुक्ति-

अपान्निधिवददाम्भ्यः (पुराधर्ष) इतीरितः ।
दुर्विज्ञेयगतिर्यस्मात् (दुराधर्षः) प्रकीर्तितः ।

---

१- छा०उ० ३।१४।२

२- पु०सू० १४

३-रा०बा० १५।३३

कृतज्ञः

विस्तृत यथोक्त निरुपाधिकदास्य निर्ममत्वानामनाथ विधाय्यारोपितस्वातन्त्र्य प्रवृत्तानां संसारिणां कृतज्ञः आनुकूल्यत्वं जानातीति

"आतोऽनुपसर्गे कः"[1] कृतज्ञः प्राणदः इत्यादयोऽप्येवम् यः सत्वाह

अपि चेत्सुदुराचारो भजते मामनन्यभाक्
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः[2] ।।

इति न च प्रत्युपकारं पश्यतीदृशे यथा-

"गोविन्देति यदाक्रन्दत् कृष्णा मां दूरवासिनम्[3] ।
ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति" इति च ।।

निरुक्ति-

प्राणिभिर्यत् कृतं कर्म तज्ज्ञात्वा फलदो यतः ।
पत्रपुष्पादिना तुष्टः कृतज्ञो मोदादानतः ।।

---

१- पा०अ० ३।२।३
२- गीता ९।३०
३- महाभा०उ० ५८।२२

कृतिर् - ओं कृतये नमः

तच्च तेषां सुकृतम् अस्मादेव प्रसन्नादिति कृतिः ।

"अकर्तरिचकारके संज्ञायाम्"[1] इत्यधिकारे

"स्त्रियां क्तिन्नन्तः एवं भूति सिद्धिप्रभृतयोऽपि यथा

"एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति"[2]

निरुक्ति-

प्रयत्नो वा क्रिया वाथ कृति रुक्ता क्रियावताम् ।

आत्मवान् सुरेशः

तस्य कर्तारोऽप्यात्मानः तदायत्तस्वरूपप्रवृत्त्यादिकतया अस्य स्वभूता इति आत्मवान् ।

"अत् सातत्यगमने" धातोः भ्वादि-

निरुक्ति-

एषामात्मशरीरादिनिरासादथवा आत्मवान् ।
स्वे महिम्नि प्रतिष्ठनात् आत्मवान् अभिधीयते ।।

---

१- पा०अ० ३।२।१९
२- कौषितकी ब्रा० ३।८।

फलापदलिप्सूनामपि ब्रह्मादीनां सुराणाम् ईशः संविधाता इति सुरेशः यथा ब्रह्मा,

यस्य प्रसादादहमच्युतस्य मतः प्रजासर्गकरोन्तकारी ।
क्रोधाच्च रुद्रः स्थितिहेतुभूतः[1]

निरुक्ति-

ब्रह्मादीनां फलापदलिप्सूनां त्रिदिवौकसाम्
संविधाता सुरेश श्च प्रोच्यते विबुधोत्तमैः ।।

शरणम् - ओं शरणाय नमः

अविशेषेण सर्वेषाम् शरणम् शृणाते रक्षणार्थाल्ल्युट एवं करणम् कारणम् प्रमाणम् भावनः इत्यादयोऽपि निरुपाधिकः प्रापकः यथा-

"तं ह देवमात्मबुद्धिप्रसादं मुमुक्षुर्वै शरणमहं प्रपद्ये"[2]

निरुक्ति-

आर्तानामार्तिहन्तृत्वात् शरणं परिकीर्तितः ।
यदुपासाद्भयं दुःखं पापं बन्धो न बाधते ।
प्रतिष्ठा च सुखं ज्ञानं भवेत् शरणं मित्यतः ।

---

१- वि०पु० ४।१।८५

२- श्वे०उ० ६।१८

शर्म - ओं शर्मणे नमः

विश्वरेताः - ओं विश्वरेतसे नमः

शर्मसुखं, परमप्राप्यं चेति - शर्म

तस्मादेवसुखार्थात् भनिन् यथा-

"सर्वगन्धस्सर्वरसः"[1]

"कं ब्रह्म खं ब्रह्म"[2]

निरुक्ति-

परमानन्दरुपत्वात् शर्म हिंसादिमन्थनात्"

विश्वं कार्यमस्येति सहि स्वज्ञानस्थानपरिचरणदैमर्थ्येन् प्रजानां ज्ञानकर्मेन्द्रियादिकं विश्वं करोति यथा,

"एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च ।

खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी"[3]

निरुक्ति-

विश्वं रेतो भगवतो विश्वरेता हरिः स्मृतः

ज्ञानेन्द्रियादिकं विश्वं परिचर्यार्थमेव हि ।

---

१- छा०उ० ३।१४

२- छा०उ० ४।१०।५

३- मु०उ० २।१।३

प्रजाभव: - ओं प्रजाभवाय नम:

सर्वा: प्रजा: तद्वैस्तैरेवोपकरणै: तस्मिन् भवन्ति तदाभिमुख्ययोग्या-
भवन्तीति प्रजाभव: अधिकरणे -

"पुंसिसंज्ञायांघ: प्रायेण"[1]
इति घ: एवम् आश्रम: नियम: यम: इत्यादय:

निरुक्ति-

तद्वैरेवकरणैस्तस्मिन्नभिमुखा: प्रजा: ।
सर्वाश्चैव भवन्तीति प्रजाभव उदाहृत: ।।

अहस् - ओं अह्ने नम:

मौलनिरुक्तानुसारात् न हीना स्येति वा- अनाथविद्यानिद्रावधो
स्वावबोधहेतुत्वात्,अह: दिवस इवेति वा-

निरुक्ति-

न सन्ति हीना यस्येति अह स्स परिकीर्तित: ।
अनाथविद्यानिद्रायां स्वबोधहेतुतया ह्यह: ।।

---

१- पा०अ० ३।३।११८

संवत्सरो

एवम् प्रबुद्धेषु समुद्धरणाय संवसतीति संवत्सरः वसे

"संपूर्वाच्चित्" इति सरन्प्रत्ययः

"सस्यार्धधातुके"[1] इति तकारः यथा-

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।।[2]

आनयैनं हरिश्रेष्ठ दत्तमस्यामयं मया"[3] इति

निरुक्ति-

इत्थं तेषु प्रबुद्धेषु वसत्युद्धरणाय यः संवत्सरस्"

व्यालः - ओं व्यालाय नमः

प्रत्ययः - ओं प्रत्ययाय नमः

अभयप्रदानप्रस्थानेन, तान् व्यालाति आदत्ते आत्मसात्करोतीति व्यालः ।

"ला आदाने" धातुः अदादिः

---

१- पा०अ० ७।४।४९

२- गीता १०।१०

३- रा०यु० १८।३४

"आतश्चोपसर्गे" इति क प्रत्ययः

निरुक्ति-

तानात्मसात् व्याल उक्तः करोति यः

प्रत्ययः

प्रतीयतेऽस्मिन्निति प्रत्ययः सहितान् प्रत्याययति विस्रम्भयति यथा-

"तं हृदेवमात्मबुद्धिप्रसादम्"[1]

यदि ते हृदयं वेत्ति यदि ते प्रत्ययो मयि ।
भीमसेनार्जुनौ शीघ्रं न्यासभूतौ प्रयच्छ मे"[2]

सर्वदर्शनः - ओं सर्वदर्शनाय नमः

तेषां, सर्वं स्वमहिमानं दर्शयतीति सर्वदर्शनः यथा-
"तस्यैव आत्मा विवृणुते तनूं स्वाम्"[3] इति

निरुक्ति-

महिमानं सर्वसहं तेषां दर्शयतीति सः
सर्वदर्शन आख्यातो नवाणाँ लोचनप्रदः ।।

---

१- श्वे०उ० ६।१८

२- भा०स०२०।७

३- मु०उ० ३।२।३

अजम् - ओं अजाय नमः

तेषां स्वप्राप्तिपरिपन्थि सर्वं दीपतीति (अजः)

"अज, गति दीपणयोः" अच् यथा धातु भ्वादि :

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता[१] ।।

निरुक्ति-

प्रत्यर्थिनस्स्वसंप्राप्तौ प्रजानां दीपती (त्यजः)

सर्वेश्वरम् - ओं सर्वेश्वराय नमः

समर्थानामसमर्थानां च सर्वेषां शरणागतानां विलम्बनम् वैक्लव्यं च परिहर्तुम् आशु तान् सर्वानश्नुते व्याप्नोतीति सर्वेश्वरः ।

"अश्नोतेराशुकर्मणि वरट् चै इति वरट् उपधाया ईकारश्च उणा०

निरुक्ति-

अशक्तानां च शक्तानां वैरुप्यं शरणैषिणाम् ।
अश्नुते परिहर्तुं यः स सर्वेश्वर ईरितः ।

---

१- गीता १०।११

सिद्ध: - ओं सिद्धायनम:

सिद्धिस् - ओं सिद्ध्यै नम: ।

तेषामनुपायसाध्य: स्वरुपेण सिद्ध इति -

स्वरुपेणैव भक्तानां सिद्धत्वात् सिद्ध उच्यते ।
उपायैरपि अयमेव सेध्यते इति सिद्धि: प्राग्वतधातु सत्वम् यथा

"यदिच्छन्तो ब्रह्मचर्यं चरन्ति" यं पृथक् धर्मचरणा:"

निरुक्ति-

अयमेव ह्युपायैश्च सिद्धि स्स्यात्साध्यते यत: ।

सर्वादिर् - ओं सर्वादये नम:

येत्वा देव ध्रुवं भक्ता: पुराणं पुरुषोत्तमम् ।
प्राप्नुवन्ति सदा कामानिह लोके परत्र च[1] ।।

तेषां परावरभूतानां सर्वेषां पुरुषार्थानाम् -
आदि: - मूलमिति सर्वादि: ।

निरुक्ति-

सर्वेषां पुरुषार्थानां मूलं सर्वादि रीरित: ।

---

१- रा०यु० १२०। ३१

अच्युत: - ओं अच्युताय नम:

वृषाकपिर् - ओं वृषाकपये नम:

तेभ्य: प्रपन्नेभ्यो नापगत: अच्युत: ।

"यस्मान्न च्युतपूर्वोऽहमच्युतस्तेन कर्मणा"

"न त्यजेयं कथंचन" इति

अच्युतमेव धर्मवराहत्वेन समर्थयते वृषाकपि: तथार्ष निरुक्तम्

"कपिर्वराह: श्रेष्ठश्च धर्मश्च वृष उच्यते ।
तस्माद्वृषाकपिं प्राह काश्यपो मां प्रजापति:"[१]

निरुक्ति-

भक्तेभ्यो च्युतपूर्वत्वात् अच्युत: परिकीर्तित: ।
आश्रितानां च्युतिर्यस्मान्नास्ति सो च्युत ईरित: ।।

निरुक्ति-

कपिर्वराह: श्रेष्ठश्च धर्मश्च वृष उच्यते ।
तस्माद् वृषाकपि प्रोक्तो वस्वणो भीष्टदो मनु: ।।

---

१- मा०शा० ३४३।५६

अमेयात्मा - ओं अमेयात्मने नमः

भाष्य-

अस्मिन् आश्रितानुगृहप्रीतसि-

"अतोज्यायांश्च पूरुषः"[१]

"भूयांश्चातो जनार्दनः" इति न्यायेन अमेयात्मा इत्यानित्य-

परिच्छेदमस्वरुपः ।

निरुक्ति-

इयानित्यपरिच्छेद्मस्वभावात्सर्वतोधिकः ।

अमेयात्मा समुद्दिष्टो ह्यानन्त्यफलदो मनुः ।।

सर्वयोगविनिःसृतः - सर्वयोगविनिःसृताय नमः

भाष्य-

कथम्- सर्वयोगविनिः सृतः -

सर्वैरपि शास्त्रलक्षणैः स्वमनोभिक्षापरि कल्पितैरपि योगैः -

उपायैः (विनिःसृतः) -विशेषेण वेदपरमगुह्यैरिव विनिःसृतः

प्राप्तुं योग्यः सुगृह इति वा यथा-

स्वबुद्धिमात्रनिर्ज्ञातः परमात्मा जगत्प्रभुः ।

स्वैश्वर्यानुभवप्रीतो ज्ञातारमनुसेवते" ।। इति श्री पौष्करे

निरुक्ति-

सर्वरुपायैः प्राप्यश्च सर्वयोगविनिःसृतः ।

---

१- पु०सू० ३ ।

वसुर् - ओं वसवे नमः

वसुः वसेः

"शॄस्वृस्निहित्रप्यसिवसिदृनिकिलदिबन्धिमनिम्यश्व" इति उः

वसुनि- निधाविव, तेषु मनो स्येति - वसुः । शॄस्वृस्निहित्रप्यसिवसिदृ०

"वस, निवासे" इति उः तेषु वसुनि- निधाविव, मनो स्येति ।

निरुक्ति-

वसतीति वसु स्तेषुप्रीत्या परमया स्वयम् ।

वसुमनाम - ओं वसुमनसे नमः

सत्यः - ओं सत्याय नमः

भाष्य- वसुमनाः

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।[१]
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ।।

निरुक्ति-

वसुनीव निधौ तेषु मनो यस्यास्ति सर्वदा ।
सर्वे वसुमनाः प्रोक्तो मातृवत् पोषको मनुः ।।

"तत्र साधुः" इति यत् सत्सु साधुः सत्य इति ।

---

१- गीता- ७।१९

समात्मा - ओं समात्मनो नमः

संमितम्- ओं सम्मिताय नमः

भाष्य-

तेषु गुणादिभिः निम्नोन्नतेष्वपि अनालोचितविशेषमनाः

समात्मा यथा-

समो हं सर्वभूतेषु न मे द्वेष्यो स्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्[1] ।।

निरुक्ति-

समात्मा समचित्तः ।

भाष्य- 'यतिस्यति[2] - इत्यादिना इकारः

असमद्वस्तस्य इति सम्यक् परिच्छिन्नः यथा,
उनषोडशवर्षो मे रामो राजीवलोचनः[3]

मितत्वाच्च तथा भक्तैः संमितः परिकीर्तितः ।

---

१- गीता ६।२९

२- पा०अ० ७।४।४०

३- रा०बा० २०।२।

समः -ओं समाय नमः

तेष्वपि परिचितापरिचिततीव्रमन्दसर्वेगित्वाधविगणय्य गौरवे सम इति समः ।

षमष्टम्, अवैकल्ये औणादिको कारः

निरुक्ति-

ज्ञाते परिचिते चापि समत्वात् सम उच्यते ।

अमोघः - ओं अमोघाय नमः

तेषां,मोघः वितथस्पर्शः,नेति-

अमोघं दर्शनं राम न च मोघस्तव स्तवः ।
अमोघास्तेभ्यन्ति भक्तिमन्तश्च ये नराः ।।

निरुक्ति-

वितथस्पर्शरहितः स ह्यमोघः प्रकीर्तितः ।

पुण्डरीकाक्षः - ओं पुण्डरीकाक्षाय नमः

'पुण्डरीकं परं धाम नित्यमक्षरमव्ययम्' तद्भवान् पुण्डरीकाक्षः[1] इति ।

---

१- मा०उ० ६६।६।

भाष्य-

पुण्डरीकाक्ष: नित्यवैकुण्ठवासिना दृष्टिभूत इत्यर्थ: यथा,

"दिवीवचक्षुराततम्" इति

निरुक्ति-

पुण्डरीकं परं धाम नित्यमक्षरमव्ययम् ।
तद्भतानामक्षिभूत: (पुण्डरीक) ईरित: ।।

वृषकर्मा- ओं वृषकर्मणे नम:

वृषाकृति: -ओं वृषाकृतये नम:

प्रकृष्टस्याप्यस्यास्मदादीनामपि पूर्वोक्तदिशा श्रेयस्करत्वात् धर्मरुपमस्य कर्मेति वृषकर्मा ।

आकृतिरपीति- वृषाकृति:

तापत्रयनिर्वापणसुधासेकशीतलचेष्टितवारुपत्वात् -वृषकर्मा वृषाकृति: ।

ततो महति पर्यङ्के मणिकाञ्चनचित्रिते ।
ददर्श कृष्णमासीनं नीलं मेराविवाम्बुदम्[1]

---

१- महाभा०राज० ४५। १२

रुद्रो - ओं रुद्राय नमः

एवं विधरुपवेष्टितद्रुतहृदयान् सानन्दबाष्पान् कुर्वन् रोदयतीति रुद्रः ।

"रोदेर्णिलुक्च" उणादि इति रक् प्रत्ययः णिलोपश्च यथा श्री विष्णुतत्त्वे -

आह्लादशीतनेत्राम्बुः पुलकीकृतगात्रवान् ।
सदा परगुणाविष्टो द्रष्टव्यस्सर्वदेहिभिः ।। इति

बहुशिराः - ओं बहुशिरसे नमः

बहूनि शिरांसि परस्सहस्रं फणा अस्येति - बहुशिराः ।

निरुक्ति-

फणाश्च बहवो यस्य स वै बहुशिरा मतः ।

बभ्रुः - ओं बभ्रवे नमः

तथाविधः सन् बिभर्तीति बभ्रुः भूतः
"कुर्भ्रश्च" इति कुप्रत्ययः द्वित्वञ्च उणादि
"यस्य सा सकला पृथ्वी फणामणिशिलारुणा ।
बिभर्ति मालां लोकानाम् - -

निरुक्ति-

अनन्तरुपो यो धत्ते पृथ्वीं बभ्रुः स ईरितः ।

विश्वयोनिः - ओं विश्वयोनये नमः

विश्वेषां भेजुषां योनि स्वेन मिश्रयितेति विश्वयोनिः

"यु मिश्रणे"

"वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्" इति नित् प्रत्ययः

निरुक्ति-

विश्वेषां भेजुषां स्वेन विश्वयोनि स्तु मिश्रणात् ।

शुचिश्रवाः - ओं शुचिश्रवसे नमः

तदुक्तानि भक्तिनम्राणि श्रावणीयानि शुचीनि- शृणोतीति शुचिश्रवाः ।

"विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च"[१]

निरुक्ति-

भक्तैरुक्तान्यवश्यं यश्शृणोति स शुचिश्रवाः ।

अमृतः - ओं अमृताय नमः

तेषां निरवधिकमाधुर्येण, जरामरणवारणेन सदा सेवायामप्यतृप्ति करत्वेन वा अमृतः यथा-

"अमृतस्येव नातृप्यन् प्रेक्षमाणा जनार्दनम्" इति

---

१- मा०उ० ९०/४२

शाश्वतस्थाणु - ओं शाश्वतस्थाणवे नमः

वरारोहो: - ओं वरारोहाय नमः

शाश्वतस्थाणु स्वयं नित्यः भोक्तृभ्यो नपहार्यश्च अपुनरावृत्ति-भोग्यत्वात्,अन्यद्ध्रयमृतम नित्यम् सकृतसेव्यं च ।

तस्मात् वरारोह: वरम् उत्कृष्टम् आरोहणम्- स्वप्राप्तिः अस्येति अन्यद्धि सर्वमवरम् यथा-

'उते वैं निरयास्तात् स्थानस्य परमात्मनः'

'परव्यूह विभवात्मना त्रिविधं परं ब्रह्म' इति भागवत सिद्धान्तः तत्र परन्नाम अकार्यम् कार्यादिनवच्छिन्नपूर्णषाड्गुण्यमहार्णवोत्कलिकातप-त्रीकृतनिस्सोम् नित्यभोगविभूतिकम् ।

तत्र प्रादुर्भावाः केचित् साक्षात् यथा, मत्स्यकूर्मादयः अन्ये तु आर्ष्यादिविशिष्टपुरुषाधिष्ठानेन,यथा-

रामकृष्णद्वैपायनादयः अपरेकालेशक्त्यावेशेन-

यथा पुरंजयादिषु इतरेच व्यक्तिषु स्वयमेवावतीर्य यथा? अचावितार इति चतुर्धा ।

तत्र वरारोहः इत्येतदन्तैनामभिः प्रायशः परत्वमुक्तम् -

निरुक्ति-

वरमुत्कृष्टमारोहो यस्यस्वप्राप्तिलक्षणः ।

वर्तते स वरारोहः प्रकृष्टस्थानदो मनुः ।।

महातपा: - ओं महातपसे नम:

एवम् एतावता प्रायश: परत्वमुक्तम् अथव्यूह: तत्र वासुदेवस्य परत्वेन व्याख्यातत्वात्,इदानीम्, अप्ययपूर्वकत्वात् सृष्टे: संजिहीर्षु-संकर्षण: प्रस्तूयते षड्गुणा व्याख्यास्यन्ते तत्र ज्ञानबले सकर्षणस्य गुणौ व्यूढौ तत्र महत्- पूज्यम्,तप: प्राचीनभवपरिश्रान्तिशान्त्यर्थं संजिहीर्षा बुद्धिलक्षणं ज्ञानम् ।अस्येति महातपा: ।

"यस्यज्ञानमयं तप:"[१] इति

निरुक्ति-

महत्पूज्यं तपोज्ञानं यस्येति स महातपा:

सर्वगस् - ओं सर्वगाय नम:

धारणसामर्थ्यलक्षणेन बलेन,आत्मवत् धारयन्,संहृतान् सर्वान् गच्छतीति सर्वग: ।

निरुक्ति-

धारयन् संहृतान्यो वै गच्छतीति स सर्वग: ।

---

१- मुण्डकोप० १।१।

सर्ववित् - ओं सर्वविदे नमः

भानुर् - ओं भानवे नमः

संहृतान् सिसृक्षुः प्रद्युम्नः ऐश्वर्यवीर्येर्गुणौ प्रद्युम्नस्य व्यूढौ तत्र,जगत्क्रिया शक्त्युल्लासरूपैश्वर्यगुणकतया,स सर्व कार्य विंदति सृष्ट्या लभत इति सर्ववित् ।

निरुक्ति-

"प्रद्युम्नत्वेतु कार्याणि लभते यस्स सर्ववित्
सर्वनिर्माणेप्यविकुर्वाणो भातीति भानुः ।।

"दाभाभ्यान्नु" इति नु

"स एष स्वयमुद्बभौ" इति इदमविकाराकारं वोयम्

निरुक्ति-

भानुस्सर्वस्य भातीति निर्माणेप्यविकारतः" ।

विष्वक्सेनो - ओं विष्वक्सेनाय नमः

अथ स्थापको निरुद्धः (विष्वक्सेनः) इनेन स्वामिना सह वर्तत इति सेना,

सेश्वरेति यास्कःअनेन रक्षकवन्तो जन्तवो विष्वन्चः अस्येति इयमत्र सामर्थ्यशरीर शक्तिः

निरुक्ति-

इनेन स्वामिना साकं वर्तते सेन इत्यतः ।
विष्वग्दयो जनो यस्य विष्वक्सेन इतीरितः ।।

जनार्दनः - ओं जनार्दनाय नमः

भाष्य-

रक्षाप्रतिपक्षान् जनान् अनपेक्षो र्दयतीति जनार्दनः ।

"दस्युत्राणाज्जनार्दनः[१]" इति इदमनपेक्षालक्षणं तेजः प्रतिमूर्तिगुणानां व्यवस्थेयम् इयतामाविष्कारात् भगवतस्सर्वत्रानावरणगुणत्वात् मूले हि श्रूयते -

भाष्य-

ज्ञानेनैश्वर्येण शक्त्येति सर्वे भगवतो नूनाः पूर्णाः इति एष आत्मा चतुर्विधः सर्वज्ञः सर्वदर्शी सर्वेश्वरः सर्वशक्तिस्समृद्धिमान् वा ग्रन्थिरनुन आप्तोवशी स्वाधीनो नादिरनन्तो व्यपगतनिद्राभयक्रोधतन्द्री व्यपगतेच्छाऽनमः क्लमव्याधिनिर्दोषो निरनिष्टो निरवद्यो ये भगवन्तं वासुदेवमेवं विदुः ये नैवं विदुः न ते विदुःइति, भगवान् वासुदेवोनन्त एवापरिमितोनन्तत्वेनापरिमितत्वेन भवति" इति प्रतिपद्यायेम् ।

---

१- मा०उ० ७२।६

वेदो - ओं वेदाय नमः

पुनः संकर्षणस्य शास्त्रप्रदत्वमुच्यते -

भाष्य-

"हलश्च इति[1], घञ् यथा
यो वै वेदाश्च प्रहिणोति तस्मै"

अतः "अभ्युपायः आगमः पन्थाः नेता ब्राह्मण, आचार्यः ।

इति संकर्षणाभिज्ञाः ।

निरुक्ति-

संकर्षणत्वे शास्त्रार्थ प्रदत्वाद् वेदः ईरितः ।

वेदविद - ओं वेदाय नमः

वेदार्थं चाविशयविपर्यासं वेत्तीति- वेदवित् आह हि,

ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद सवेदवित्[2] ।।

निरुक्ति-

असंशयविपर्यासं वेदार्थं वेत्ति वेदवित

---

१-पा०अ० ३।३।१२१

२- गीता १५।१।

अव्यङ्गो -ओं अव्यङ्गायनम:

वेदाङ्गो- ओं वेदाङ्गाय नम:

विगतानि- विहीनानि अङ्गानि- स्वकल्पितानिच्छन्द: कल्पादिनि अस्येति-व्यङ्ग: तैरविहीनतया स नेति अव्यङ्ग: ।

वेदाश्चानन्तशाखा:,अस्य अङ्गं शरीरम्-अन्तरङ्ग व्यंजकत्वादिति वेदाङ्ग: यथा-

"नावेदविन्मनुते तं बृहन्तम्"[१]

"विधूनुते वेदमयं शरीरम्" श्रुतिस्मृति ममैवाज्ञा"

निरुक्ति-

शिक्षाव्याकरणाद्यङ्गैर्विहीनो व्यङ्ग उच्यते ।
यस्य वेदो नन्तशाखो वेदाङ्गो ङ्गतया स्मृत: ।

वेदवित् - ओंवेदविदे नम:

कवि: - ओं कवये नम:

वेदवित् - पूर्ववत्

---

१- का०उ० ३पृ०पं०५५

स एव कान्तदर्शित्वात् कविः

'कु' शब्दे दर्शनकर्मणो स्यात् इन अदादि धातुः

<u>निरुक्ति-</u>

स एव कान्तदर्शित्वात् कवि रित्युच्यते बुधैः ।

<u>लोकाध्यक्षः</u> - ओं लोकाध्यक्षाय नमः

<u>सुराध्यक्षो</u>- ओं सुराध्यक्षाय नमः

<u>धर्माध्यक्षः</u> - ओं धर्माध्यक्षाय नमः

अथ कान्तदर्शित्वोपपादनमुखेन त्रिभिरनिरुद्धस्य फलप्रदत्वमुच्यते लोकानां धर्माधिकारिणाम्, अध्यक्षः स्वामी, अकृताभ्यागमकृतविप्रणाश प्रसंगपरिहारेण फलं दातुमनुसन्धातेति <u>लोकाध्यक्षः</u> <u>सुराध्यक्षः</u>, <u>धर्माध्यक्षः</u>।

अतोऽह्यस्य, धर्मज्ञः उपायज्ञः, अध्यक्षः सत्यसन्धः स एवास्य संविदन् ददाति' इति व्यपदेशः

<u>निरुक्ति-</u>

धर्माधिकारिणो लोकाः तदाराध्याः सुरास्तथा ।
धर्मस्तत्साधनं तेषामध्यक्षः स्यात्रिनामवान् ।।
लोकाध्यक्षस्सुराध्यक्षो धर्माध्यक्ष इति क्रमात् ।
अनिरुद्धस्स विज्ञेयो लोकाध्यक्षादिनामवान् ।।

कृताकृत: - ओं कृताकृताय नम:

द्वौ च धर्मौ - संसारस्य प्रवर्तको निवर्तकश्च तत्रप्रवर्तकस्या नित्यफलप्रदत्वेनोपचारात् कृत: निवर्तकस्य नित्यफलप्रदत्वेन अकृतश्चेति स एव- कृताकृत रिति ।

निरुक्ति-

अनित्यानित्यफलदौ प्रवर्तकनिवर्तकौ
ददौ यस्य स्वरूपं स: (कृताकृत) इतीरित: ।।

चतुरात्मा - ओं चतुरात्मने नम:

चतुर्व्यूह: - ओं चतुर्व्यूहाय नम:

चतुरात्मा- वासुदेव: सकर्षण: प्रद्युम्न: अनिरुद्ध इति अथैकस्य
चातुरात्म्यम् अत्राह-

चतुर्व्यूह: - यथोक्तप्रयोजनेभ्य: ध्येयाराध्यव्यक्तये च, समस्तव्यस्तेन
गुणषट्केन तद्व्यान्जकव्यवस्थितावयववर्णभूषणप्रहरण-
वाहनध्वजादिभि: जागृदाद्यव्यवस्था चतुष्टयविशिष्टाभिर्मूर्तिभि:
चतुर्धा व्यूह्यत इति ।

निरुक्ति-

वासुदेवादिरुपत्वात् चतुरात्मेति कथ्यते ।
जागृत्स्वप्नसुषुप्त्यादौ व्यूहावस्था चतुष्टये ।
एतैर्विशिष्टमूर्तित्वात् चतुर्व्यूह: इतीरित: ।।

चतुर्दंष्ट्रः - ओं चतुर्दंष्ट्राय नमः

व्यूहमूलेन परेण रूपेण चायं महापुरुषलक्षणविशिष्टतया चतस्रः दंष्ट्राः अस्येति- चतुर्दंष्ट्रः यथा-

"चतुर्दशसमद्वन्द्वः चतुर्दंष्ट्रश्चतुर्गतिः"[1]

निरुक्ति-

दंष्ट्राचतुष्कयुक्तत्वात् चतुर्दंष्ट्र इति स्मृतः ।

चतुर्भुजः - ओं चतुर्भुजाय नमः

तथाहि परं रूपमाहु
"तमसः परमो धाता शङ्खचक्रगदाधरः"[2]
"भुजैश्चतुर्भिस्समुपेतम्"[3] इत्यादि

निरुक्ति-

महापुरुषत्वादुच्यते हि चतुर्भुजः ।

---

१- रा०यु० ३४।१६३
२- रा०यु० ११४।१५
३- विष्णुपुराणे

भ्राजिष्णुर - ओं भ्राजिष्णवे नमः

भोजनम् - ओं भोजनाय नमः

इदमेवयथोक्तं व्यूहाभाजते- उपासितृम्य ताच्छील्येन प्रकाशन इति भ्राजिष्णुः ।

"भुवश्च"[1] इत्यत्र चकारादिष्णुच्

तैः भुज्यते- सुखेन अनुभूयते इति भोजनम् ।

भोक्ता- ओं भोक्त्रे नमः

तदर्पितम् घृतदारिमधुशर्करामिश्रगोधूमतण्डुलपापसापरपर्यायम्, प्रायणमपि अमृतमिव भुङ्क्ते इति भोक्ता पूर्ववत् धातुः यथा-

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्
सुहृदं सर्वभूतानांज्ञात्वा मां शान्तिमृच्छति ।।[2]

निरुक्ति-

भोक्ता र्पितस्य भोक्तृत्वाद् भोक्ता स्यादमृतस्य वा ।

---

१- पा०अ० ३।२।१३८

२- गीता ५।२९

सहिष्णुर् - ओं सहिष्णवे नमः

दुःसहान् स्वभक्तविषयान् अनवीक्षकानपि अपराधान् तच्छीलः सहत इति सहिष्णुः ।

"अलंकृञ्०"[1] इत्यादिना इष्णुच् कुतः इयती महतोदामा अस्येत्याकाङ्क्षायाम् शशिसलिलशीतलिमादिवत्, स्वरूपप्रयुक्तत्वादित्येवं परः ताच्छील्यादिविषय इष्णुच् प्रत्ययः स्वम् व्यूहः ।

जगदादिजः - ओं जगदादिजाय नमः

विभः प्रस्तूयते तत्र तावत् त्रिमूर्तिमिथ्यावतारः जगतोस्य आदिषु आदिभूतासु ब्रह्मविष्णुशिवात्मिकासु त्रिमूर्तिषु अन्यतमत्वेन जायते इति जगदादिजः ।

"सप्तम्यां जनेर्डः" स्वम् मेघजं गदाग्रजादयोपि यथा ब्रह्मा-

"यस्यप्रसादादमच्युतस्य भूतप्रजासर्गकरोन्तकारी ।

क्रोधांच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्तात्"[2]

इति तथा उद्योगे देवाः ।

निरुक्ति-

जगतामादिभूतासु मूर्तिष्वन्यतमत्वतः ।

जातत्वाद्विष्णुरूपेण प्रोच्यते जगदादिजः ।।

---

१-पा०अ० ३।२।१३६

२- वि०पु० ४।१।३६

अनघो - ओं अनघाय नमः

एवं संसारमध्येजनित्वापिअघविरोधी पापप्रतिस्पर्धीति अनघः ।

विजयो - ओं विजयाय नमः

जेता - ओं जेत्रे नमः

विश्वयोनि- ओं विश्वयोनये नमः

मूर्त्यन्तरयोरपि सृष्टिसंहारादिभिः ज्ञाद्विजयो स्यादिति -विजयः तावपि द्वौ जयति स्वाभिप्रायेष्ववस्थापयति जेता ।

धातुः पूर्ववत् ततस्तृचः अनिट्गुणः अनड0ादि। विश्वयोनि-पूर्ववत् ।

निरुक्ति-

विजयो ज्ञाता जयी

स्वाभिप्राये स्थापयिता जेता स्याद्विधिशंकरौ ।।

पुनर्वसुः - ओं पुनर्वसवे नमः

पुनः तत्प्रभृतिषु देवेष्वन्तरात्मतया वसति चेति - पुनर्वसुः यथा- "देवानांबन्धुनिहितं गुहासु" ब्रुधा "वस" निवासे धातुः

निरुक्ति-

ब्रह्मादिष्वपि देवेषु ह्यन्तरात्मतया च यः ।

पुनर्विवसन्नान्नित्यं पुनर्वसु रुदाहृतः ।।

उपेन्द्रो - ओं उपेन्द्राय नमः

आदित्येषु जघन्यजः इन्द्रानुजतया उपगतइन्द्रमिति उपेन्द्रः

वामनः - ओं वामनाय नमः

प्रांशुर् - ओं प्रांशवे नमः

श्रुत्यनुसारात् स एव इन्द्रसंत्राणाय बलिमखे -

"दृष्ट्वा स्वकान्त्या वामानि सुखानि नयतीति- वामनः इति श्रुतिः

"स वामनो दिव्यशरीरधृक्" इति

तत्रैव दाणात् प्राश्नुते सर्वं व्याप्नोतीति प्रांशुः ।

"अशूव्याप्तौ" प्रपूर्वः धातोः स्वादि ।

"खब्शरुशंक्वंशुपीयुनीलंगुलि० इत्यादिना उ प्रत्ययः नुमागमश्च

निरुक्ति-

दृष्ट्या स्वकान्त्या वामानि सुखानि नयतीति यः स वामनो ।

व्याप्तिमत्त्वात् प्रांशुश्च परिकीर्तितः ।।

अमोघश् - ओं अमोघाय नमः

पूर्ववत् ।

शुचिर् - ओं शुचये नमः

ईदृगुपकारेण प्रत्युपकारनैरपेक्ष्यात् शुचिः परिशुद्ध इति- शुचिः "शुच" शोके धातुः ।

इन्द्रपघात् क्ति खम् ऋषिरुचिप्रभृतय: यथा-

"अस्पर्शश्च महान् शुचि:" इति

निरुक्ति-

स्वयंकृतोपकारेण यत्किंचित् प्रत्युपक्रियाम् ।
अनपेक्षा स्थितो यो सौ शुचि: स्यात् धर्मदो मनु: ।

अर्जित: - ओं अर्जिताय नम:

अतीन्द्रम् - ओं अतीन्द्राय नम:

परिपन्थिप्रबन्धनादौ,ऊर्जा- बलम् अस्य संजातेति वा तत्र बलिष्ठ इति वा (उर्जित: ) इत च्

इन्द्रानुजत्वेपि ऐश्वर्येणापदानेन तमतिक्रान्त: अतीन्द्र: यथा-
"अविदितविभवाय" इति तन्त्रमन्त्रवर्ण: मन्त्रे
"अतिवायिवन्द्रकर्मणाम्" इति

निरुक्ति-

ऊर्जा बलं यस्य नित्यं संजाते त्यूर्जित: स्मृत: ।
इन्द्रानुजत्वेप्यैश्वर्यादितीति तीन्द्र उच्यते ।

संग्रहस् - ओं संग्रहाय नम:

सर्गो- ओं सर्गाय नम:

त्रिविक्रमणसंग्रहपादपद्मतयाभक्तैरयत्नेन सम्यक् गृह्यत् इति संग्रह: ।

"गृहवृहनिश्चिगमश्च"[1] इति अप्

सुहृत्सु निसृष्टात्मतया तेभ्यस्सृज्यत इति सर्ग:

निरुक्ति-

भक्तैरप्यप्रयत्नेन संग्राह्यस संग्रह स्स्मृत:
ब्रह्मादिभ्यस्सृज्यते य सर्गं तं परिचक्षते ।

धृतात्मा - ओं धृतात्मने नम:

नियमो - ओं नियमाय नम:

आत्मदानेन धृता आत्मानो नेनेति धृतात्मा ।

"धृञ् धारणे" कर्मणि क्त: धातु म्वादि अनिट् दीर्घ: तत: नान्तलक्षणादीर्घ इत्यादि धृतात्मा ।

तत्र तिबलाबलिप्रभृतयो नियम्यन्ते अनेनेति-नियम:

"यम: समुपनिविषु च"[2] इति अप्

निरुक्ति-

येनात्मनो धृता नित्यं स धृतात्मेति कीर्त्यते
नियम्यते जगयेन नियम: स उदीरित: ।।

---

१- पा०अ० ३।३।५८

२- पा०अ०३।३।६३

यम: - ओं यमाय नमः

वेधो - ओं वेधाय नम:

अखिलमकण्टकानुकूल्म यच्छतीति यम:
पूर्ववतधातु: पचाधच् यथा
"य: पृथिवीमन्तरो यमयति"[1]
"य आत्मानमन्तरो यमयति" माध्यन्दिनशाखायाम्

आविर्भूय प्रकटितातीन्द्रियमहिमतया सर्वैरपि वेदितुं शक्य इति वेद: ।
"विद् ज्ञाने" धातो: ।

निरुक्ति-

अकण्टकं चानुकूलं यच्छतीत्यखिलं यम: ।
सर्वैश्च वेदितुं शक्य: सौलभ्यात् वेध ईरित: ।।

वैधम् - ओं वैधाय नम:

सदायोगी- ओं सदायोगिने नम:

वेदतृमवभन्जिनोमि विधामधीते वेदवेति वैध:
"तदधीते तद्वेद" इत्यण् यथा -[2]
एवमत्र सततजागरुक: सदयोगी यथा-
"य एषु सुप्तेषु जागर्ति इति -

१- बृ०उ० ५।७।२
२- पा०अ० ४।२।५६

निरुक्ति-

वेदतृणां भवाख्यस्य गदस्य विनिवर्तनीम्
वेधामधीते वेदेति यो वैद्य: समुदाहृत: ।
चिकित्सायां जागरुक: सदायोगी ति कथ्यते ।

वीरहा - ओं वीरघ्ने नम:

स्ववेदनविहन्तृन् वीरान् - हेतुक्कवीरान् हतवानिति वीरहा
"ब्रह्मभ्रूणवृत्रेषु०"[1] इति नियम: प्रायिक: एवम् कामहा, क्रोधहा
मगहा इत्येवमादयोऽपि यथा-

तानहं द्विषत: क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।।[2]

निरुक्ति-

स्वध्यानमक्षकान् वीरान् हन्ति य: स वीरहा ।

---

१- पा०अ० ३।२।८७
२- गीता १६।१९

मधवां - ओं माधवाय नमः

मधुः - ओं मधवे नमः

स्वविषयपरविद्याप्रवर्तनात् माधवः यथा -

"मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् ।
तस्मान्माधवनामासि धवस्स्वामीति शब्दितः । इति

लब्धविधेभ्यो मन्यते स्वदत इति मधुः ।
"मन ज्ञाने" आस्वादनकर्मेहायम्"
"फलिपाटिनमि०" इत्यादिना उ प्रत्ययः धकारोन्तादेशश्च

यथा-
"मध्वउत्सः"[१] इति

निरुक्ति-

"भक्तेभ्यो लब्धविधेभ्योस्वदमानतया मधुः ।

अतीन्द्रियो - ओं अतीन्द्रियाय नमः

मधुरमधुदधिस्वरुपेस्मिन् परव्यूहविभवहूक्षणाड्गुण्यविवक्षया स्वरुपं शोध्यते अतिक्रान्तः इन्द्रियाणि ज्ञानोपकरणानि तदविषयत्वेति अतीन्द्रियः" ।

निरुक्ति-

ज्ञानोपकरणव्रातमतिक्रान्तो ह्यतीन्द्रियः"

---

१- पु०सू०

महामायो - ओं महामायाय नम:

कथमित्थं- महति अप्रपन्न निखिलजनमोहिनी तिरस्कारिणीवत् माया अस्यैति यथा-

"गुणमायासमावृत:" इति
नेयं मृषा मायेति कथ्यते

निरुक्ति-

माया यस्याप्रपन्नानां सर्वेषामस्ति मोहनी
महामाया: य विज्ञेयो वस्वणर्मैनुरुज्ज्वल: ।।

महोत्साहो - ओं महोत्साहाय नम:

ज्ञानमयादपि अकर्तु: अलसोदासीनात् सांख्येश्वरात् व्यवर्तकमैश्वर्य गुणमाह (महोत्साह: )

शंकरभाष्ये- "जगदुत्पत्तिस्थितिलयार्थमुद्युक्तत्वात् महोत्साह: ।

भाष्ये तु-

अथ षाड्गुण्यं व्याचिख्यास्यते तत्र कर्तृत्वप्राधान्यविवक्षयात्व-लक्षणस्यैश्वर्यस्य प्राथम्यम् अन्यच्च, वक्ष्यमाणसंगतिविशेषेण विशिष्टकृम अनन्यनियोज्यनिरंकुशस्वसंकल्पकणिकामात्रेण सर्वसृष्ट्या च अकर्तृत्वव्यावर्तक: महान् अभ्यधिक: उत्साह: उत्साहनं कर्तृत्वलक्षणमैश्वर्यम्, अस्येति महोत्साह:

"षह मर्षणे" धातु

निरुक्ति-

महदुत्सहनं यस्य ह्यैश्वर्यं कृतलक्षणम् ।
महोत्साह स्स विज्ञेयो मनुरैश्वर्यदायकः ।।

महाबलः - ओं महाबलाय नमः

महाबुद्धिः - ओं महाबुद्धये नमः

भाष्ये तु-

सहायापेक्षाकर्त्रन्तरव्यावर्तकं महत् बलमस्येति- महाबलः अनेन ह्यम् अपरिमितक्रियोऽपि अनाकलित श्रमः स्वे महिम्नि तिष्ठन् अवधीरिताधारान्तरः दुर्वारव्यापार संततशक्तिसमुल्लासः शरीरमिव सकलं बिभर्ति,

'बहुल्यन् बहुलम्' इति च भीता ।
एतल्लेशो जीवनसमीरण गिरिधरादौ ।

असर्वज्ञकारणव्यवच्छिका महती बुद्धिः-अविशयविपर्यासासार्वज्ञ्य लक्षणं ज्ञानम्,अस्येति महाबुद्धि ।
'बुध अवगमने' धातुः
'पश्यत्यचक्षुः स्सशृणोत्यकर्णः'[1]
'सर्वतोऽक्षिशिरोमुखम्'[2] इत्यादि

---

१- श्वे०उ० ३।१९

२- तै०उ०

"एवेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते ।
नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते" इति

निरुक्ति-

महाबुद्धि महत् ज्ञानं स्वरुपं यस्य सोच्यते ।।

महावीर्यो - ओं महावीर्याय नमः

दधिभावमापद्यमानदुग्धादिकारणेभ्यो भेदकम्, सत्यपि द्वैतावविकार-लक्षणं महत् वीर्यमस्येति महावीर्यः ।

आरु मृगमदकस्तूरिकाकुसुमामोदवत् संनिधिमात्रेण निमार्यादिकार्यकारी ह्यम् यथा-

"तस्य सन्निधिमात्रेण गन्धः क्षोभाय जायते
मनसोनोपकर्तृत्वात् तथासौ परमेश्वरः" इति

महाशक्तिर् - ओं महाशक्त्यै नमः

महाद्युतिः - ओं महाद्युतये नमः

उपादानशक्तिविकलनिमित्तमात्रताव्यावर्तिका महती शक्तिः साधन ग्राम विनियोगस्वशरीरैकदेशीकृतप्रकृतिपरिणामयोग्यतालक्षणसामर्थ्यम् अस्येति महाशक्तिः ।

"शक्लृ शक्तौ" धातुः स्त्रियां क्तिन् अनिट् प्राचीने तु पदे प्रागिव पुंवद्भावो विशेषः अस्या विपुष्ट्प्रधानदुग्धादौ ।

सहकार्यपेक्षाकारणवैलक्षण्यकरं तदनपेक्षालक्षणं तेजो महदस्येति महाद्युति यत् बाह्यान्तरतमोविरोधिस्वपरवर्गयोः यथा-

"परस्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"[1]

"तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः"[2]

अनिर्देश्यवपुश् - ओं अनिर्देश्यवपुषे नमः

एतत्षाड्गुण्यविग्रहत्वेनानुपमत्वात्, अनिर्देश्यम् - इदमीदृशमिति निर्देष्टुमशक्यम् वपुः -शरीरम् अस्येति अनिर्देश्यवपुः ।

"षाड्गुण्यविग्रहं देवं भास्वज्ज्वलनतेजसम्" इति पौष्करसंहितायाम्

"बुद्धिमनोऽङ्गप्रत्यङ्गवत्तां भगवति लक्षयामहे, शास्त्रशब्देभ्यः बुद्धिमान् मनोवानङ्गप्रत्यङ्गवान्" इति पौष्करसंहितायाम् ।

इत्यादिना- "शुद्धसत्त्वमयेन ह्यनेन कनकपलेन रत्नमुन्मील्यते षाड्गुणी नतु त्रिगुणमयेनैव निमील्यते" इति तत्त्वम् वैष्णवे च,

निर्देशविशेषणम् - उपमानविशेषणम्, तद्वर्जितः अनुपमवपुरित्यर्थः

निरुक्ति-

ज्ञानादिषाड्गुण्यमयमुपमानविवर्जितम् ।
वपुरस्यास्ति तेजिष्ठम् अनिर्देश्यवपुर्हि सः ।।

श्रीमान - श्रीमतये नमः

पूर्ववत् ।

---

१- श्वे०उ० ६।८

२- वि०पु० ६।५।८५

"परस्यशक्तिर्विविधैव श्रूयते स्वभाविकी ज्ञानबलक्रिया च"[1]

"तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशि:"[2]

अनिर्देश्यवपुश् - ओं अनिर्देश्यवपुषे नम:

एतत्षाड्गुण्यविग्रहत्वेनानुपमत्वात्, अनिर्देश्यम् - इदमीदृशमिति निर्देष्टुमशक्यम् वपु: -शरीरम् अस्येति अनिर्देश्यवपु: ।

"षाड्गुण्यविग्रहं देवं भास्वज्ज्वलनतेजसम्" इति मौलसंहितायाम्

"बुद्धिमनोऽङ्गप्रत्यङ्गवतां भगवति लक्षयामहे, शास्त्रशब्देभ्य: बुद्धिमान् मनोवानङ्गप्रत्यङ्गवान्" इति मौलसंहितायाम् ।

इत्यादिना- "शुद्धसत्त्वमयेन ह्यनेन कनकदलेनेव रत्नमुन्मील्यते षाड्गुणी नतु त्रिगुणमयेनेव निमील्यते" इति तत्त्वम् वैष्णवे च,

निर्देशविशेषणम् - उपमानविशेषणम्, तद्वर्जित: अनुपमवपुरित्यर्थ:

निरुक्ति-

ज्ञानादिषाड्गुण्यमयमुपमानविवर्जितम् ।
वपुरस्यास्ति तेजिष्ठम् अनिर्देश्यवपुर्हि स: ।।

श्रीमान - श्रीमतये नम:

पूर्ववत् ।

---

१- श्वे०उ० ६।८

२- वि०पु० ६।५।८५

अमेयात्मा - ओं अमेयात्मने नमः

पूर्ववत् ।

महाद्रिधृत - ओं महाद्रिधृते नमः

अथ तदनुगुणयथेष्टव्यवहारचेष्टितम् प्रदर्श्यते, स च अथनसमये महान्तमद्रिम् - मन्दरम् धृतवानिति महाद्रिधृत् ।

निरुक्ति-

सिन्धुगम्भीरभावो यो त्वमेयात्मा स कीर्तितः ।
महान्तं मन्दरं योहि धृतवान् स महाद्रिधृत ।

महेष्वासो - ओं महेष्वासाय नमः

सिन्धुबन्धदशकन्धरवधादौ, महान् मनोहारी इषूणां शराणाम् आसः- आसनं चापः अस्येति - महेष्वासः ।

निरुक्ति-

महेष्वास स्स विज्ञेयश्चण्डकोदण्डमण्डितः ।

महीभर्ता - ओं महीभर्त्रे नमः

श्रीनिवासम् -ओं श्रीनिवासाय नमः

तदानीं महीम् - ललितचरणीम् तच्छीलो बिभर्ति भरतीति वा- महीभर्ता ।

श्रीनिवासः इति च मथनसमानीतलक्ष्मीचाटुकारवक्षो धिरोपणादि दिव्यचेष्टापरम्"

निरुक्ति-

घरणाधृतिलीलस्सः महीभर्ते ति शब्द्यते ।
मथनानीतलक्ष्मीवान् श्रीनिवासः स ईरितः ।।

सतांगति - ओं सतांगतये नमः

अनिरुद्धम् - ओं अनिरुद्धाय नमः

स्वच्छन्दचेष्टितैरपि,सतां प्रणतानां गतिः प्रियंकरतया प्राप्य इति सतां गतिः ।

एवं निर्धूतनिरोधनिरवधिकजीवलोकजीवाणुदिव्यचेष्टितः अनिरुद्धः ।

"अपरिमितचेष्टो भगवाननिरुद्धः" इति मौला: मौलसंहितायाम्

निरुक्ति-

प्रणतानां प्रियकर स्सतांगति रिहोच्यते ।
अनन्तचेष्टायुक्तत्वा दनिरुद्ध उदाहृतः ।।

सुरानन्दो - ओं सुरानन्दाय नमः

गोविन्दो- ओं गोविन्दाय नमः

आपत्सखत्वेन सुरा आनन्दन्ति यस्मादिति सुरानन्दः ।

तैस्तूयमानोपकारतया तेषां गा:स्तुतिगिर:, विन्दति लभते इति गोविन्द: ।

'गवादिषु विन्देस्संज्ञायाम्'[1] इति श: तै: सुरै: स्तूयमानोपकार: ।

निरुक्ति:

सुरानन्द स्सुरान् सर्वानानन्दयति यस्सदा ।
गवां स्तुतिगिरां विन्दो गोविन्द स्स उदाहृत: ।

गोविन्दांपति: - ओं गोविन्दांपतये नम:

गाव: वेदगिर: तद्विदां ज्ञानिनां ज्ञानयज्ञाराध्यत्वेन पाता गोविन्दांपति: यथा-

'हंसमूर्तिमिथात्मानं ज्ञानयज्ञभुजं स्मरेत्' इति

मरीचिर् - ओं मरीचये नम:

दमनो - ओं दमनाय नम:

स्वं जनुषाऽस्थानेभ्योऽपि जन्तुभ्य: प्रकाशितनिर्मलरुप: मरीचि: मृकणिभ्यामीचि: मृङ० अत्र दीप्तिकर्मा ।

कान्तिमन्दाकिनीभि: भवतापंदाम्यतीति दमन:

निरुक्ति-

भवतापस्य दमनात् कान्त्या दमन ईरित: ।

१- पा०अ० ३।२।१३८

हंसः - ओं हंसाय नमः

सुपर्णः - ओं सुपर्णाय नमः

क एवम् हंसः हिनस्ति, मनोहरं हन्ति गच्छति हसति-स्मयत इति वा हंसः यथा-

"सत्यसत्त्वशुभाश्रयपरमहंसाय" इति -

शोभनपर्णत्वात् संसारपारनयनाद्वा सुपर्णः इति नैरुक्ताः

निरुक्ति-

शोभनपर्णत्वात् सुपर्ण इति कथ्यते ।
संसारपारनयनात् सुपर्ण इति वा मतः ।।

भुजगोत्तमः - ओं भुजगोत्तमाय नमः

व्यूहपश्चिमोऽनिरुद्धः पद्मनाभमुक्तः इह प्रादुर्भावप्रथम, पद्मनाभो विवक्ष्यते भुजगोत्तमः भुजगस्य शेषस्य, उत्तमः शेषो, अनन्तयोगपर्यङ्कशयनः
"सुष्वाप भगवान् विष्णुरपर्यङ्कामेक एव हि ।
नागस्य भोगे महति शेषस्यामिततेजसः ।।

हिरण्यनाभस् - ओं हिरण्यनाभाय नमः

स एव हिरण्यम् - स्वसंकल्पजनिताष्टदलपद्महिरण्यमयकर्णिकात्वापन्न मेरुरूपं रुक्मम् नाभौ अस्येति -हिरण्यनाभः ।

निरुक्ति-

हिरण्यनाभ स्सौन्दर्यनाभिर्यस्येति स स्मृतः"

सुतपाः - ओं सुतपसे नमः

पद्मनाभः - ओं पद्मनाभाय नमः

सुतपाश्च तपो-ज्ञानम् संवृतसादि तद्ध्याने

"दिव्यबोधतनुर्विभुः" इति

पद्मनाभश्च पूर्ववत्"

प्रजापतिः - ओं प्रजापतये नमः

पूर्ववत्

अमृत्युः - ओं अमृत्यवे नमः

अमृत्युः मृत्युविरोधी, मृत्युमृत्युत्वात्"

"मृङ् प्राणत्यागे" धातुः तुदादिः

"भुजिमृङ्भ्यां युक्त्युकौ" उणादि इति त्युक् प्रागुक्तरीत्या न योरनः अगुणः अनिट् नञ्तत्पुरुषः नलोपः"

निरुक्ति-

अमृत्युरिति तं प्राहुः सप्ताणां मृत्युनाशकः"

सर्वदृक् - ओं सर्वदृशे नमः

स एव सर्वान् - अनुकूलप्रतिकूलतटस्थान् यथार्हं नियन्तुं पश्यतीति-

सर्वदृक् ।

'दृशेश्चेति वक्तव्यम्' इति क्विन्

'क्विन प्रत्ययस्य कुः इति सर्वतोमुखः ?

निरुक्ति-

अनुकूलान् तटस्थांश्च प्रतिकूलानपि स्वयम् ।
नियन्तुं च यथायोग्यं यः पश्यति स सर्वदृक् ।।

सिंहः - ओं सिंहाय नमः

रिपुद्विपनिर्भेषणभीषणमहानुसिंहसंहननतया, सिञ्चति, हिनस्तीति

वा- सिंहः ।

सिचेस्संज्ञायाम् ०' इति उणादि कः नुम हश्च ।

निरुक्ति-

रिपुद्विपानां निर्भेदनभीषणः सिंह उच्यते ।

संघाता - ओंसंघात्रे नमः

संधिमान्- ओं संधिमते नमः

रिपुद्विपनिष्पेषणभीषणोऽपि -संघाता प्रणयानां प्रह्लादप्रभृतीनां संश्लेषयिता-

स च तैस्संधिर्नित्योऽस्येति -संधिमान् नित्ययोगेमतुप्

निरुक्ति-

प्रह्लादाद्यैश्च संघाता संश्लेषकरणाच्च सः।
प्रह्लादाद्यैर्नित्यसंधिर्यस्यस्यात् संधिमान्स्मृतः।

स्थिरः - ओं स्थिराय नमः

तत्सन्धाने तदपचारदुर्विचाल्यत्वात् - स्थिरः

"अजिरशिशिर०" इत्यादिना किरच् प्रत्ययः निपात्यते उणादि "भद्रम्" इति हि तन्मन्त्रवर्णः

निरुक्ति-

अपचारैप्यचाल्यत्वात्संधाने स्थिर उच्यते

अजो - ओं अजाय नम:

पूर्ववत्

दुर्मर्षणश् - ओंदुर्मर्षणाय नम:

शास्ता- ओं शास्ते नम:

प्रतीपै: दुष्करं मर्षणमस्येति दुर्मर्षण:

'रथाङ्गशङ्खधातारं ब्रह्ममूर्तिं सुमोर्षणम्' ध्याने

एवं सर्वकण्टकं साधु शास्तीति शास्ता तत्साधुकारिणि

तृन् -

'तृनवृचौशंसिदादादिभ्य: संज्ञायांचानिटौ' उणादि इत्यनिट् यथा-
'द्रवन्ति दैत्या:'[1]

निरुक्ति-

दुष्करं मर्षणं यस्य परै दुर्मर्षण: स्मृत: ।
समस्तान् कण्टकान् शास्तीत्यत: शास्ते ति कीर्त्यते ।।

विश्रुतात्मा, ओं विश्रुतात्मने नम:

स एव सर्वदा सर्वत्र सर्वै र्विस्मयेन विश्रुत: सैदापदानस्वभाव: यथा-
'अशेषदेवेशनरेश्वरेश्वरै:' इत्यादि ।

---

१- वि०पु०

सुरारिण - ओं सुरारिघ्ने नमः

स एव सुरारिं हिरण्यकशिपुमुरो विदारं हृतवानिति सुरारिहा यथा "सत्सत्त्वकरजश्रेणीदीप्तेनाभयपाणिना"

"संयच्छते यथा सम्यक् भयानां सोभयं परम् । इति ध्याने ।

निरुक्ति-

हिरण्यकशिपोर्हन्ताकीर्त्यते स सुरारिहा

गुरुर्गुरुतमो - ओं गुरुतमाय गुरवे नमः

अथमत्स्यावतारः अविशेषविद्यापरमाचार्यकः गुरुः

"स पूर्वेषामपि गुरु" इति हैरण्यगर्भाः

"कृग्रोरुच्च" इति कुप्रत्यय उणादि उकारश्चान्तादेशः तस्यैव विशेषणम् ।

"गुरुतमः" न स्वतन्त्रनामत्वमस्य"

पूज्यश्च गुरुर्गरीयान्[१]

---

१- गीता ११।४३

धाम - ओं धाम्ने नमः

संहारनश्वरचराचरबीजाधारनोंकणधारकत्वेन तदाश्रयत्वात् धाम धाम्नः

"सर्वधातुभ्यो मनिन्" इति मनिन् प्रत्ययः

निरुक्ति-

चराचराधारतया धामे ति परिचद्यते"

सत्यः - ओं सत्याय नमः

पूर्ववत् ।

सत्यपराक्रमः - ओं सत्यपराक्रमाय नमः

निमिषो - ओं निमिषाय नमः

तेषु सत्यः अकैतवः पराक्रमः वृत्ति अस्येति सत्यपराक्रमः
तद्विरोधिषु निमिषति न कटाक्षयतीति निमिषः ।

निरुक्ति-

वृत्तिर्ह्यकैतवा यस्य स स्यात् सत्यपराक्रमः
यो सौ सतान्नेदाते हि निमिषः स विरोधिनः ।

अनिमिषश् - ओं अनिमिषाय नमः

स्रग्वी - ओं स्रग्विणे नमः

सत्सु न निमिषति जागर्तीति अनिमिषः दिव्यमीनतनुः

तिर्यक्त्वेऽपि परत्वसूचिनी वैजयन्ती स्रगस्य नित्ययोगिनीति स्रग्वी ।

"अस्मायामेधास्रजो विनिः" इति विनिः

निरुक्ति-

स्रजा नित्ययोगात् स्रग्वी ति परिकीर्त्यते ।

वाचस्पतिर् - ओं वाचस्पतये नमः

स एव वाचः वेदवाचः मात्स्यपुराणेनोपबृंहणात्पतिः-स्वामी इति वाचस्पतिः षष्ठ्यालुक् ।

"षष्ठ्याः पतिपुत्रपृष्ठपारपदपयःपोषेषु च" इत्यादिना सत्वम् ।

निरुक्ति-

वेदोपबृंहणत्वाद्धि वाचस्पति रिति श्रुतः ।

उदारधी: - उदारधिये नमः

एवं सर्वोपजीव्यत्वात् उदाराधी: सार्वज्ञ्यलक्षणा बुद्धिः, अस्येति उदारधी ।

निरुक्ति-

सर्वोपजीव्यसार्वज्ञ्यादुच्यते स उदारधी:

अग्रणीर्- ओं अग्रण्ये नमः

तेन प्रकारेण अग्रिमं पश्चिमं पदं नयतीति अग्रणी ।

ग्रामणीः - ओं ग्रामण्ये नमः

श्रीमान् - ओं श्रीमते नमः

न्यायो - ओं न्यायाय नमः

तत्र नित्यसिद्धानां ग्रामं समाजं नयतीति - ग्रामणी "सत्सूद्विषः"[1] इत्यादिना क्विप "अग्रग्रामाभ्यां नयतेरिति वक्तव्यम्"[2] इति णत्वम् "श्रीमान् पूर्ववत्"

एवं न्यायः अमूर्णहेतुयुक्तकारीति -न्यायः

निरुक्ति-

ग्रामं समाजं सूरीणां नयति ग्रामणीश्च यः ।
न्यायो हि युक्तकारित्वाद्भक्तेष्वेव विशेषतः ।।

---

१- पा०अ० ३।२।६१



२- पा०अ० ८।४।३९

नेता - ओं नेत्रे नमः

समीरणः- ओं समीरणाय नमः

नियुक्तं करोतीति -नेता निर्वाहशीलः न्याय्यं हि निमज्ज्य निस्तारणं महात्मानाम्

एवमिष्टचेष्टः - समीरणः

'ईर गतौ कम्पने च' अदादि चलनशव्दार्थादकर्मकाधुन् एवम् पवनादयोऽपि उक्तार्थेषु

कृत्वा मीनमयीं सद्यः प्रविवेश रसातलम् ।
वेदमूर्तिस्ततो वेदानानिन्ये ब्रह्मणोऽन्तिकम्

निरुक्ति-

'भक्तैर्नियुक्तं यत् कर्म नेता तत्करणादपि ।
भक्तेष्टचेष्टाशीलत्वात् समीरण उदाहृतः ।।

सहस्रमूर्धा- ओं सहस्रमूर्ध्ने नमः

विश्वात्मा - ओं विश्वात्मने नमः

सहस्राक्षम् - ओं सहस्राक्षाय नमः

सहस्रपात् - ओं सहस्रपदे नमः

अथ एतद्विधावताराङ्गीजोवितासु पुरुषसूक्ताद्यासु परविद्यासु यथा प्रतिपाद्यते तथा तद्रूपाणि नामानि प्रस्तूयन्ते सहस्रम-असंख्येयाः मूर्धानः शिरांसि अस्येति - सहस्रमूर्धा ।

"सर्वतः पाणिपादं तत्सर्वतो दिशिरोमुखम्[1]
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति"

"तैश्चतत्कार्यज्ञान क्रियासामर्थ्यानन्त्यं लक्ष्यते" इति अभियुक्ताः
औचित्यात् बहुशास्त्रान्तरसंगतेश्च"

"आभ्यां ज्ञानशक्नाभ्यां विश्वव्यापनात्" "विश्वात्मा" यथा
"स भूमिं विश्वतो वृत्वा"[2]

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ।।[3]

निरुक्ति
---------

अदिपादपदेज्ञानकर्मेन्द्रियनिदर्शके ।
तेनानन्तज्ञानकर्मा सहस्राक्षः सहस्रपात् ।
आभ्यान्च ज्ञानकर्माभ्यां विश्वात्मा व्यापनात्स्मृतः"

---

१- गीता १३।१३
२- पु०सू०
३- गीता १०।२०

आवर्तनो -ओं आवर्तनाय नमः

निवृत्तात्मा - ओं निवृत्तात्मने नमः

संसारघटीयन्त्रम्,आवर्तयति- परिवर्तयतीति- आवर्तनः यथा-
तेनेदं भ्राम्यते ब्रह्मचक्रम्[1]

ईश्वरः सर्वभूतानां हृद्देशे र्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ।।[2]

"तस्माद्विराडजायत"[3]

त्रिपाद्विभूतिकत्वेन संसारविभूतेः, निवृत्तः उद्गतः आत्मा स्वरूपं अस्येति- निवृत्तात्मा ।

"त्रिपादूर्ध्वउदैत्पुरुषः"[4]

निरुक्ति-

त्रिपाद्विभूतिकत्वेन भवपादविभूतितः
उद्भतात्मस्वरूपत्वात् निवृत्तात्मेति कथ्यते ।।

---

१- भा॰
२- गीता १८।६१
३- पु॰सू॰ ५
४- पु॰सू॰

संवृतम् - ओं संवृताय नमः

संप्रमर्दनः - ओं संप्रमर्दनाय नमः

तस्यां दशायाम् तमसः परस्तात्स्तनतया तामसानाम् मूढानां संवृतः - आवृतः गूढइति संवृतम् ।

संवरणं तमः स्वविधाया संप्रमर्दयतीति- संप्रमर्दनः ।

"तमेवं विद्वानमृतइह भवति"[1]

निरुक्ति-

तामसानां तु मूढानां गूढात्वात् संवृतस्स्मृतः"

तमसां विधायां सम्यङ्० मर्दनात् संप्रमर्दनः ।

अहस्संवर्तको - ओं अहस्संवर्तकाय नमः

अहः -तदुपलक्षितं कालम्, हेतुत्वात्, संवर्तयति- परिवर्तयतीति अहस्संवर्तकः एकन्नाम् "ण्वुल्" युवोरनाकौ"

"सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि"[2]

निरुक्ति-

अहर्लक्षितकालस्य परिवृत्तेश्च साधनम्"

अहस्संवर्तक इति प्राहुर्वेदान्तपारगाः ।।

---

१- पु०सू०

२- तै०ना० १।१।८।

वह्निः - ओं वह्नये नमः

देशरूपेण विश्वं वहतीति -वह्निः
"वहिश्रियुद्रुग्लाहात्वरिभ्यो नित्" उणादि"
इति निप्रत्ययः प्रथमश्चदेशः परमाकाशः आपेदिकौ न्योगणान्
दिगादिस्तत्कोणे यथा,

अस्यामृतन्दिवि"[१]

निरुक्ति-

विश्वस्य देशरूपेण वहनाद् वह्नि रुच्यते ।

अनिलो - ओं अनिलाय नमः

एवमेषाम् अननात् उज्जीवनात् अनिलः
सलिकल्यनि०" इत्यादिना इलच् उणादि" अस्यकलेवप्रसिद्धो निलः

"प्राणाद्वायुरजायत"[२]

निरुक्ति-

"वह्लादेरननाद्यौसा वनिलः परिकीर्तितः ।

---

१- पु०सू० ३
२- पु०सू० १४

धरणीधर: - ओं धरणीधराय नम:

अन्यदपि धारकं धारयतीति धरणीधर:[1]।

"सदाधारपृथिवीन्धामुतेमाम्"

निरुक्ति-

भूतधात्र्याश्चधरणीधारणाद् धरणीधर:"

सुप्रसाद: - ओं सुप्रसादाय नम:

स एवं संविधाय सम्मुखेणुशोभन: प्रसाद: अस्येति सुप्रसाद:

"तमक्रतुं पश्यति वीतशोको धातु: प्रसादात्[2]"

निरुक्ति-

प्रसादपरत्वाच्च सुप्रसाद: प्रकीर्तित:।

प्रसन्नात्मा - ओं प्रसन्नात्मने नम:

विश्वसृट्- ओं विश्वसृजे नम:

तत्कारणम् प्रसन्नात्मा स्वत एवावाप्तकामतया रागाद्यनुपप्लुतमना:

यथा- "अविजिघत्सो पिपास: सत्यकाम: सत्यसंकल्प:[3]" इति

१- का०४ पृ०१ अ०८

२- श्वे०उ० ३।२०

३- छा०उ० ८।१।५

गुणदोषमनपेक्ष्यदाक्षिण्यात् विश्वं सृजतीति-विश्वसृक्

निरुक्ति-

विश्वं जगत्सृजति यो विश्वसृक् स प्रकीर्तितः ।

विश्वभुग्विभुः - ओं विश्वभुग्विभवे नमः

सत्कर्ता - ओं सत्कर्त्रे नमः

तथैव व्याप्य भुनक्ति पालयतीति विश्वभुग्विभुः एकन्नाम यथा-
एवं सर्पार्योदण्डापूपिकया सतः सत्कर्ता यथा-
"सज्जनप्रतिपूजकः" इति

निरुक्ति-

सत्सृष्टं व्याप्य वै भुन्जन् पालयन् विश्वभुग्विभुः ।
सत्कर्ता यस्स विज्ञेयः सज्जनप्रतिपूजकः ।

सत्कृतस् - ओं सत्कृताय नमः

साधुः - ओं साधवे नमः

तैश्च श्रद्धार्पितेन स्वल्पेनापि स्वमहिमानुगुणैनैव अप्रतिपन्नप्रत्यु-
पकारपरितुष्टतया सदकारि पूजित इति सत्कृतः ।[१]
"मालाकारेण पूजितः" इति

१- वि०पु० ५।१९।२९

तदपेदितदूत्यसारथ्या दिसाधयतीति साधुः ।

"कृवापाजि०" इत्यादिना साधेरुण् " उणादौ

निरुक्ति-

अर्चादिभिस्सज्जनैर्यः पूजितस् सत्कृत् स्स्मृतः ।

सेवां सारथ्यदूत्याद्यां साधु स्साधयतीति सः ।।

जह्नु- ओं जह्नवे नमः

अभक्तेषु आत्ममाहात्म्यमपन्हुत इति जन्हुः ।

"नारायणाय विद्महे"[1]

"नारायणपरं ब्रह्म"

"एको ह वै नारायण आसीत्"[2]

अथ दिव्यो देव एको नारायणः[3]

निरुक्ति-

अभक्तेष्वात्ममहात्म्यनिन्हुतेर् जन्हु रुच्यते ।

---

१- तै० ६।१।२६

२- महोपनिषदि १

३- सु०उ० ६

नारायणो - ओं नारायणाय नमः

इति प्रतिशाखं परस्य वस्तुनो मूर्त्यन्तरव्यावर्तकतया निर्दिष्टमसाधारणन्नामाह- नारायणः श्रौतनिरुक्तम्

यच्च किंचित् इति अन्यत् अप्रकरणत्वात् नाचक्ष्महे[१]

निरुक्ति

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायण स्स्मृतः

नरः - ओं नराय नमः

इदमेवगूढं व्याचष्टेः अनश्वरचिदचिद्विभूतिकतया नरः चिद्विद्वर्गः अस्यास्तीति वा नरः ।

असंख्येयो - ओं असंख्येयाय नमः

तत्समूहाश्चास्यासंख्येया इति असंख्येयः

निरुक्ति-

अगण्यनरसंघोयः सो संख्येयः प्रकीर्तितः

---

१- पु०सू०

अप्रमेयात्मा - ओं अप्रमेयात्मने नमः

विशिष्टः - ओं विशिष्टाय नमः

तेषामसंख्येयानाम्, एकैकशोऽपि अप्रमेयानामनवधिकानामन्तर्बहिश्च व्यपनात् अप्रमेयात्मा ।

स्वत एव तदनपेक्षावैलक्षण्यत्वात् विशिष्टः ।

निरुक्ति-

विलक्षणो विशिष्टो यस्सर्वास्ताननपेक्ष्य सः

शिष्टकृत् - ओं शिष्टकृते नमः

शुचिः - ओं शुचये नमः

अपितु स्वसंबन्धेन तान् स्वानुगुणकल्याणान् कुर्वन् अनाधेयदीप्तिः शिष्टकृच्छुचिः ।

निरुक्ति-

स्वानुकूलशुभान् कुर्वन् स्वसंबन्धेन तान् स्वयम् ।
अनाधेयमहादीप्तिः शिष्टकृच्छुचि रुच्यते ।।

सिद्धार्थः - ओं सिद्धार्थाय नमः

सिद्धसंकल्प - ओं सिद्धसंकल्पाय नमः

अथ यथोक्तोपपादनम् सिद्धार्थः ।

स्वत एव वावाप्तकामत्वात् तदुपरि सिद्धसंकल्पश्च स्वातन्त्र्येण प्रयुक्ततया स्वेच्छया साधितसर्वार्थ इत्यर्थः

"सत्यकामस्सत्यसंकल्पः"[१] इति

निरुक्ति-

सत्यसंकल्पवत्त्वाच्च सिद्धसंकल्प ईरितः ।

सिद्धिदस् - ओं सिद्धिदाय नमः

सिद्धिसाधनः - ओं सिद्धिसाधनाय नमः

अणिमगरिमाद्याः सिद्धीः साधकेभ्यो ददातीति सिद्धिदः यस्य साधनमपि

ये तु धर्म्यामृतामिदम्"[२] इति न्यायेन

अनुष्ठानवेलायामपि प्रियंकरत्वात् सिद्धिरुपम्,सः सिद्धिसाधनः

निरुक्ति-

सिद्धिदो ह्यणिमाद्यष्टसिद्धिदः कायदानतः ।
तत्सिद्धेश्चापि हेतुत्वात् सिद्धिसाधन ईरितः ।।

---

१- छा०उ० ८।१५।१०

२- गीता १२।२०

वृषाही - ओं वृषाह्विणे नमः

निखिलमङ्गलाङ्कुरार्पणदिनत्वात् वृषरूपम् - धर्मरूपम् अहः
अस्य प्रथमाभिगमनदिवसम् (वृषाहः) राजाहस्सखिभ्यष्टच्

तदस्यास्तीति वृषाही यथा-

'ता निशास्ते च दिवसाः' इत्यादि

'यथा ह्येवैष एतस्मिन्नदृश्ये अथ सो यं गतोभवति'[1] इति च

वृषभो - ओं वृषभाय नमः

एवमभिगच्छतो भवदघान् बर्षतीति वृषभः ।
'ऋषिवृषिभ्यां कित्' इति वृषेरभच् प्रत्ययः किद्भावश्च -

विष्णुः - ओं विष्णवे नमः

वृषपर्वा - ओं वृषपर्वणे नमः

एवं वर्षान् वेवेष्टीति विष्णुः
'विषॢ व्याप्तौ' धातु विषेकिच्च् इति णुः
तैस्तैरुपकारैरधिकेन भगवता न्यूनानां स्वव्यतिरिक्तानामविनाभावस्ता
किकप्रसिद्धो त्र व्याप्तिरभिमताः,
वृषाः वर्णाश्रमधर्माः ते तदारोहणसोपानपर्वाणीति वृषपर्वा ।

---

१- तै०आ० २।७

निरुक्ति-

विष्णु स्स्याद विनाभावाद्धयाप्यव्यापकभावत:
वृषा वार्णाश्रमा धर्मा: पर्वाण्यारोहणे तु ते ।
यस्य सन्ति सदा सो यं वृषपर्वा प्रकीर्तित: ।

वृषोदर: - ओं वृषोदराय नम:

वर्धनो - ओं वर्धनाय नम:

आराधकानां यथालब्धहविरादिभिस्सुपूरत्वेन सर्वार्तास्पदत्वेन वा, धार्मिकोदरत्वात् वृषोदर: ।

मातृवत् तान् उदरे कृत्वा वर्धयतीति वर्धन: ।

वर्धमानश्च - ओं वर्धमानाय नम:

विविक्तश - ओं विविक्ताय नम:

तान् वर्धयन् स्वयमपि वर्धत इति वा एवं प्रापौरर्थ्यवस्यत्समृद्धिरिति वा वर्धमान: ।

मातृवत् तान् उदरे कृत्वा वर्धयतीति वर्धन: ।

निरुक्ति-

भक्तैरुपाहृतां पूजामुपहारांश्च धर्मत: ।
कृत्वोदरे योजयति स वृषोदर उच्यते ।

मातृज्जठरे कृत्वा भक्तान् वर्धयति स्वयम् ।
वर्धनः प्रोच्यते नित्यं सप्ताणां वृद्धिदो मनुः"

श्रुतिसागरः - ओं श्रुतिसागराय नमः

एवं प्रकारगुणप्रवणानां श्रुतीनाम् सागर इव हरिदोषाणां परमा पर्यवसानभूमिरिति -श्रुतिसागरः ।

"नारायणपरा वेदाः"[1]
"वेदैश्च सर्वैरहमेव वेद्यः"[2]

निरुक्ति-

नदीनां सागर इव स्वगुणोक्तिविधाजुषाम् ।
श्रुतीनामवसानत्वात् कथ्यते श्रुतिसागरः ।

सुभुजो - ओं सुभजाय नमः

दुर्धरो - ओं दुर्धराय नमः

प्रसन्नमरघुर्यशोभनभुजः सुभुजः ।
तादृग्भुजबलेन संवर्तसमुद्रवेगः वालक्रीडासैकतसेतुमिरिव परैर्दुर्धारवेगः दुर्धरः ।
"ईषद्दुस्सुषुः[3]" इत्यादिनाखल्"

---

१- भाग० २।५।१५
२- गीता १५।१५
३- पा०अ० ३।३।१२६

निरुक्ति-

प्रसन्नभरणो घुर्यभुजो यः सुभुज स्तु सः
परैर्दुर्वारवेगो यो दुर्धर स्स च कथ्यते ।

वाग्ग्मी - ओं वाग्ग्मिने नमः

तथा वेदात्मकतया जित्वरः मधुरगम्भीर प्रियहिततया च प्रशस्यतया वाक् अस्यास्तीति वाग्ग्मी ।

"वाग्विवृताश्च वेदाः"
"बुद्धिमान् मधुराभाषी पूर्वभाषी प्रियंवदः"
ओघमेघस्वनः काले प्रगृह्य विपुलं भुजम् ।
अनर्मकृतमत्रस्तम निरस्तमसंकुलम् ।
राजीवनेत्रो राजानं हेतुमद्वाक्यमब्रवीत्" इत्यादि ।

निरुक्ति-

"वेदलक्षणवक्तृत्वाद् वाग्ग्मी प्रियहितोक्तितः" ।

महेन्द्रो - ओं महेन्द्राय नमः

एवं सर्वतोमुखं प्रभृ तत्वात्, पूज्यपरमैश्वर्यः महेन्द्रः
इदि परमैश्वर्ये"
"ऋजेन्द्राग्र० इत्यादिना उणा० रन् प्रत्ययान्तो निपातितः।

निरुक्ति-

परमैश्वर्यवत्त्वेन महेन्द्र इति शब्द्यते ।

वसुदो - ओं वसुदाय नमः

एवं सत्यप्यनभिभवनीये महेन्द्रत्वेन महत्त्वे लघुभ्यो धनायद्भ्योधनं ददातीति वसुदः यथा-

निरुक्ति-

वसुदो धनदानाच्च धनायद्भ्यो विशेषतः"

वसुः - ओं वसवे नमः

नैकरूपो - ओं नैकरूपाय नमः

गरीयसां स्वयमेव धनमिति वसुः ।

अथ यथोक्तमहिमोचितवैश्वरूप्यम्, तत्तत्सर्वप्रतीतियोग्यरूपः नैकरूपः।

"नभ्राण्णपात्[१]०" इत्यत्र नभ्राट् ग्रहणस्य प्रदर्शनार्थत्वात्, नञ् समासस्य महाविभाषया विकल्पितत्वाद्वा नलोपाभावः एवं नैकमाय इत्यादयः ।

"विश्वरूपाय" इति मन्त्रवर्णात्

निरुक्ति-

तत्तज्जनज्ञानयोग्यं रूपं यस्य विशेषतः ।

नैकरूप स्समुद्दिष्टः सर्वप्रत्ययगोचरः ।।

---

१- पा०अ० ६।३।७५

बृहद्रूपः - ओं बृहद्रूपाय नमः

शिपिविष्टः - ओं शिपिविष्टाय नमः

एवैकमेव दिग्व्योमावकाशं व्याप्नुवत् बृहद्रूपमस्येति बृहद्रूपः शिपयः रश्मयः, तान् संप्रविष्टः व्याप्तवानिति शिपिविष्टः यास्कः ।

प्रकाशनः - ओं प्रकाशनाय नमः

ओं ओजस्तेजोद्युतिधरः

इदमेवं दिव्यं रुपं दिदृक्षुभ्यो र्जुनादिभ्यो सो प्रकाशयतीति प्रकाशनः यथा-

"दिव्यन्ददामि ते चक्षुः पश्य मे योगमैश्वरम्"[1]

(ओजः) बलम् (तेजः) पराभिभवनसामर्थ्यम्, कीर्तिर्वा, (द्युतिः) औज्ज्वल्यम्, तानि धरतीति- ओजस्तेजोद्युतिधरः ।

प्रकाशात्मा - ओं प्रकाशात्मने नमः

प्रतापनः - ओं प्रतापनाय नमः

ऋद्धम्- ओं ऋद्धाय नमः

प्रकाशात्मा यथा धृतराष्ट्रः

"त्वमेव पुण्डरीकाक्ष सर्वस्य जगतः प्रभुः[2] ।
तस्मान्मे यादवश्रेष्ठ प्रसादं कर्तुमर्हसि ।।

---

१- गीता ११।८



२- भा०उ०

भासस्तवोग्रा: प्रतपन्ति' इति प्रतापन:
एवम् कूलमुद्दहत्पावर्णानां वक्ष्व रुद्ध: ।

स्पष्टाक्षरो - ओं स्पष्टाक्षराय नम:

अनयध्या प्रतिपाद्यया स्पष्टीकृतवेदाक्षर इति स्पष्टाक्षर: ।

निरुक्ति-

स्पष्टीकृताश्च वेदाणां यस्मात् स्पष्टाक्षरो मत:

मन्त्र: -ओं मन्त्राय नम:

चन्द्रांशुर ,- ओं चन्द्रांशवे नम:

भास्करद्युति: - ओं भास्करद्युतये नम:

परेषां परिभावुकप्रभावत्वात् भास्करद्युति यथा-
'रक्षांसि भीतानि दिशो द्रवन्ति'[१]

निरुक्ति-

परप्रभावाभिवलक्षणद्युतिमांश्च य: ।
स भास्करद्युति: प्रोक्तो नेत्रवैमल्यदो मनु: ।

१- गीता ११। ३६

अमृतांशूद्भवो - ओं अमृतांशूद्भवाय नम:

भानु: - ओं भानवे नम:

शशबिन्दुस् - ओं शशबिन्दवे नम:

एव च शशानाम् -कुटिलगतिनां विन्दु: अपलपितेति -शशबिन्दु: ।

"शशप्लुतौ" शशानां कुटिलगतिनाम्" बिन्दु: अपलपिता

"विदि अवयवे" "बिन्दुरिच्छुरित्युप्रत्ययान्तो निपातित:"

सुरेश्वर: - ओं सुरेश्वराय नम:

औषधम् - ओं औषधाय नम:

तथा ऋजुगतीनाम् निवाहिक: सुरेश्वर: ।
भवतीव्रविषापहप्रभावत्वात् औषधम् यथा -
"देवा देवर्षयश्चैव यं विन्दुर्दुखभेषजम्" इत्यादि

जगतस्सेतु:-

सत्यधर्मपराक्रम: - ओं सत्यधर्मपराक्रमाय नम:।

एवंविधा: धर्मा: कल्याणगुणा: पराक्रमा: चेष्टितानि च, सत्या:-अवितथा: यस्य स: सत्यधर्मपराक्रम: ।

भूतभव्यभवन्नाथ: - ओं भूतभव्यभवन्नाथाय नम:

पवन:- ओं पवनाय नम:

एवं प्रायं स्वाम्यमैश्वर्यवान केवलमथ, किन्तु त्रिकालेऽपीति भूतभव्यभवन्नाथ: ।

एवं सर्वदा सर्वत्र स्वभावादेव पुनातीति- पवन: पवित्रमित्यर्थ: एतद्मन्येन गन्धवाहस्यापि सततगतित्वम् ।

पावनो - ओं पावनाय नम:

तथा स्वसंबन्धिनो गङ्गादीन् जगत्पुनानान् प्रयोजयतीति पावन: यथा- अगस्त्य: ।

'पावनस्सर्वलोकानां त्वमेव रघुनन्दन' रामायणे'

अनल:- ओं अनलाय नम:

कामहा- ओं कामघ्ने नम:

अन् अल: अतन्द्रो देव: ईदृक् -भक्तिशोकरानुवेधात् लौकिकानलस्यापि अन्-अलत्वम् ।

एवं प्रकार स्वगुणदर्शिनां विषयान्तरविषयस्पृहांहन्तीति-कामहा । 'नकामकलुषं चित्तं मम ते पादयोस्स्थितम्' इति तदर्शिन:'

कामकृत -

कान्तः - ओं कान्ताय नमः

स्वयं सौन्दर्यसौकुमार्यादिरुपगुणैः कान्तःकर्मनिष्ठायाम्
"अनुनासिकस्य क्विझलोः क्ङिति" इति दीर्घः

कामः - ओं कामाय नमः

कामप्रदः- ओं कामप्रदाय नमः

शीलौदार्यदयादिभिरात्मगुणैश्च, निकामकमनीयत्वात् कामः
एतदगुणबिन्दुना हि, मदनोपि जगत् उन्मादयति ?
स्वकामेभ्यः दातृकामेभ्यश्च यथार्ह काम्यं प्रददातीति-कामप्रदः
"प्रे दाज्ञः"[1] इति कः वसुप्रदः इत्यादयोपि यथा

प्रभु

पूर्ववत् ।

---

१- पा०अ० ३।२।६

युगादिकृद् - ओं युगादिकृते नमः

युगावर्तः -

नैकमायो-

अथात्मयादाश्चर्यत्वम् तत्र न्यग्रोधशाय्यवतार उदाहरणम्
युगस्यान्ते पि आदिं करोतीति- युगादिकृत् ।

स खलु संवर्ते पि प्रलयात् अनुपप्लुतं जगत् प्रवर्तितवान् स्वधर्मव्य-
वस्थया, कृतादियुगानां पौनः पुन्येन आवर्तनात् युगावर्तः ।

मुग्धशिशुरूपापरिमितजगन्निगरणनिरालम्बनैकोदकवटदलशय-
नाधनैकातक्यार्शिवर्य -नैकमायः ।

न च मिथ्यावचनो यं माया-शब्दः तथ्ये पि प्रयोग भूयस्त्वात्
तथाहि -
"मायां तु प्रकृतिं विधात्"[1]
"मायावयुनं ज्ञानम्"
"विश्वानि देव ? वयुनानि विद्वान्" इति च ज्ञानेः,
"माङ्० माने"

निरुक्ति-

धर्मव्यवस्थया स्वस्य युगाद्यावर्तनान्मुहुः ।
युगावर्तः समाख्यातः कालरूपधरो हरिः" ।

---

१-श्वे०उ० ४।६।

महाशनः - ओं महाशनाय नमः

अदृश्यो - ओं अदृश्याय नमः

महत् अशनं निखिलजान्निगरणम् अस्येति- महाशनः

अतर्क्यवृत्तान्ततयादृश्यः द्रष्टुं शक्यः नेति अदृश्यः ।

ऋदुपधाच्चाक्लृपिचृतेः[1] इति क्यप् ।

निरुक्ति-

भुवनानान्निगरणात् महाशन् इतीरितः ।

अतर्क्यवृत्तान्ततया जातः प्रलयेपि यः ।
न लब्धश्चिन्त्यमानोपि सो दृश्य इति कथ्यते ।।

व्यक्तरुपश्च- ओं व्यक्तरुपाय नमः

अथ च, कित्वान्न मार्कण्डेयादेरनुग्रह दिव्यविग्रहतया व्यक्तं रुपम् अस्य इति व्यक्तरुपः ।

---

१- पा०अ० ३।१।११०

सहस्रजित् - ओं सहस्रजिते नमः

सहस्रयुगसंख्यं कल्पान्तं शयनो जयतीति- सहस्रजित् ।
यावद्युगानां विप्रर्षे सहस्रं परिवर्तते ।
तावत् स्वपिमि[1] इत्यादि

निरुक्ति-

सहस्रयुगसंख्याकं सर्वकल्पान्तमेव हि ।
शयान एव जयति सहस्रजिदिति स्मृतः ।

अनन्तजित् - ओं अनन्तजिते नमः

इष्टः - ओं इष्टाय नमः

अविशिष्टः - ओं अविशिष्टाय नमः

परिमितशिशुरूपस्यात्यस्य कश्चित् कदाचित् कथन्चिदपि, महिमावधिक्रमणो नास्तीति अनन्तजित् ।

स्वमुदरेण धृतैर्मुख्यैरपि अविशेषेण जनयित्रीववान्छिल इति इष्टः अवशिष्टः तथा ।

निरुक्ति-

इष्टो विशिष्टः कथितः सर्वरक्षणतत्परः ।

---

१- आर०अ० १८६।४१

शिष्टेष्ट: - ओं शिष्टेष्टाय नम:

पण्डिताग्रण्या मार्कण्डेयादीनां परमपुरुषार्थत्वेन इष्ट: शिष्टेष्ट: तत्रैव च -

आसीनं तं नरव्याघ्रं पश्याम्यमिततेजसम्[1] इति

शिखण्डी - ओं शिखण्डिने नम:

अपरिमिताप्रधृष्यमैश्वर्यं परं तेजश्शिखण्डस्यातिशयितमिति-शिखण्डी ।

[2] अतिशायने० इति इनि:

निरुक्ति-

अत्यप्रधृष्यमैश्वर्यं परं यत्तेज आस्थितम् ।
तच्छिखण्डन्तु यस्यास्ति तच्छिखण्डीति चद्यते ।।

नहुषो - ओं नहुषाय नम:

वृष: - ओं वृषाय नम:

तथा स्वमायया जीवान् नह्यति बध्नातीति नहुष: इति स एव अमृतोपमया स्वकान्त्या वाचा च तादृशा, सागरोदराक्रान्तं मार्कण्डेयमाश्वासयन् वर्षति-सिञ्चति इति वृष: ।

---

१- मा०आ० १८८।१२९

२- पा०अ० ५।२।५५

निरुक्ति-

स्वदेहकान्त्या वाचापि सम्यगाश्वासन्मुहुः ।
बहुशस्सिन्चति तु यः वृष स्सपरिपठ्यते ।।

क्रोधहा

क्रोधकृत- ओं क्रोधकृते नमः

कर्ता - ओं कर्त्रे नमः

विश्वबाहुर् - ओं विश्वबाहवे नमः

तथा निघक्रोधहेतोः कार्तवीर्यस्यच्छेत्ता कर्ता यथा-

"निःक्षत्रियां यश्चकार मेदिनीम्" इति
एवं कण्टकोद्धारेण विश्वस्मै बाहू यस्य सः विश्वबाहुः ।

महिधरः - ओं महिधराय नमः

एवं भारावतरणेन महीं धत्ते इति महीधरः ।

निरुक्ति

भारावतरणं कृत्वा गां धत्ते स महीधरः ।

अच्युत:

पृथ्वि: - ओं पृथिताय नम:

पूर्ववत् ।

तथात्वेन पृथते प्रसिद्धो भवति इति पृथित: ।

"तस्य नाममहद्यश:"[१]

निरुक्ति-

"अच्युतत्वेन लोकेऽस्मिन् प्रख्यात: पृथित: स्मृत:"

प्राण: -

प्राणदो -

पूर्ववत् ।

वासवानुज: - ओं वासवानुजाय नम:

अपान्निधिर् - ओं अपान्निधये नम:

अमृतार्थिनं वासवमनु तत्संविधानाय जात इति वासवानुज: ।

"जनौ कर्मणि" इति ड:

१- तै० ३।१।५

२- पा०अ० ३।२।१००

मथ्यमानमहार्णवधारणात् अपान्निधिः

निरुक्ति-

"वासवस्यानुजत्वेन जातत्वाद् वासवानुजः ।
अपान्निधि मथ्यमानमहार्णवविधारणात्" ।।

अधिष्ठानम् - ओं अधिष्ठानाय नमः

मन्दराद्रे रधिष्ठानं भ्रमतो भून्महामुने" इति आधिष्ठानम् ।

निरुक्ति

भ्रममाणं मन्दराद्रिं धृतवान् यो महाजले
अधिष्ठानं तमेवाहुराधिष्ठान प्रदोमनुः ।।

अप्रमत्तः - ओं अप्रमत्ताय नमः

प्रतिष्ठितः - ओं प्रतिष्ठिताय नमः

एवं विधान त्राणेषु अप्रमत्तः अत्यन्तमवहितः"
स्वयमन्यानपेक्षाया स्वे महिम्नि प्रतिष्ठितः ।
"स भावः क्व प्रतिष्ठित" इति[1]
"स्वे महिम्नि स्थितं देवम्" इति च ।[2]

निरुक्ति-

स्वे महिम्नि स्थितो यस्तु स प्रतिष्ठित उच्यते ।

---

१- छा०उ० ७।२४।१

२- विष्णुपुराणे ।

स्कान्द: - ओं स्कान्दाय नमः

स्कन्दधरो - ओं स्कन्दधराय नमः

स्वयमसुरादीन् स्कन्दयति शोषयतीति स्कन्द: ।

तादृश सुरसेनान्यमपि धरत इति स्कन्दधर: सो पि हि, तस्य विभूति: ।

निरुक्ति-

असुरादीन् शोषयति स्कन्द: स्कन्दयतीति य: ।
स स्कन्दधर आख्यात: षडाननविधारणात् ॥

धुर्य:
वरदो

धुरं भुवनभारं वहतीति धुर्य:

अन्येभ्यो पि लोककार्यधुर्येभ्यो देवेभ्य: तांस्तान् वरान् ददातीति वरद: ।

वायुवाहन: - ओं वायुवाहनाय नमः

वायुवाहन: जगत्प्राणं वायुं वाहयतीति

निरुक्ति-

जगत्प्राणं वहति यो वायुवाहन उच्यते ।

वासुदेवो - ओं वासुदेवाय नमः

अथ त्रिषट्काध्यात्मविषयः - वासुदेवः ।

वासुश्चासौ देवश्चेति विश्वं स्वस्मिन् सविचीव वासयन् पदाभ्यामिवाच्छादयंश्च, तस्मिन् वसतीति-वासुः एव क्रीडति, विजिगीषते, अथ च द्योतते, स्तूयते, गच्छति, चेति देवः अतो वासुदेवः ।

यथा-

छादयामि जगत्सर्वं भूत्वा सूर्य इवांशुभिः ।
सर्वभूताधिवासश्च वासुदेवस्ततः स्मृतः[१] ।।

बृहद्भानुः - ओं बृहद्भानवे नमः

तदेवव्याचिकीर्षति तत्र धात्वर्थनिर्देशक्रमाविवक्षया यत् भोग-विभूत्याद्योतमानत्वं तत् तावदुच्यते बृहन्तोमहन्तो विश्वदीप्राः मानवः किरणाः अस्येति बृहद्भानुः ।

निरुक्ति-

बृहन्तो मानवो यस्य स बृहद्भानुरुच्यते ।

---

१- मा०मो० १९९

आदिदेव: -

पुरन्दर:

अशोक:- ओं अशोकाय नम:

आध्यात्मिकानां शोकमोहाशनायदीनां विरोधी - अशोक: ।

तारणम् - ओं तारणाय नम:

तार: - ओं ताराय नम:

शूर: - ओंशूराय नम:

आधिभौतिकेभ्यश्च वैरिचोव्याध्यादिभयेभ्यस्तारयतीति तारण: ।
तार: संसारभयतो नित्यं तारयतीति स: ।

"गर्भजन्मजरामरणसंसारसागरमहाभयात्तारयतीति तस्मदुच्यते तार: इति।
यद्विजिगीषुत्वम्, तदुच्यते शूर: समर्थ: जैत्र इति शूर: ।

"शु गतै" "शुषिचिमीनां दीर्घश्च" क्वन् प्रत्ययो दीर्घश्च ।

शौरि: -ओं शौरये नम:

यद्विशिष्टतो भक्तान्प्रति गमनं तत्प्रदर्श्यते शूरस्य वसुदेवस्य अपत्य-
मिति शौरि: ।

"अत इञ्"[१]

१- पा०अ० ४।१।९५

जनेश्वरः

अनुकूलः

शतावर्तः - ओं शतावर्ताय नमः

तथा शतम् आवर्तविशेषाः अतिवेलत्वेऽप्यनुवेलो क्रियमाणतया संकटगतिनाभिसमुद्भवत्सरिदावर्तवत् तदुपलक्ष्याण्यैश्वर्यविजृम्भितानि, अस्येति - शतावर्तः ।

पद्मी - ओंपद्मिने नमः

एवं वासुदेवत्व गुणतो विवृत्त्य,रूपतोऽपि विव्रियते,लीलापद्मेन नित्ययोगात् पद्मी ।

पद्मनिभेक्षणः -

पद्मनाभो

अमलकमलास्फालननिभं श्रमापहं वीक्षणमस्येति पद्मनिभेक्षणः ।

पद्मनाभः पूर्ववत् ।

अरविन्दाक्षः - ओं अरविन्दाक्षाय नमः

अरविन्दसुन्दरे अक्षिणी अस्येति अरविन्दाक्षः ।

निरुक्ति-

रक्तारविन्दनयन स्त्वरविन्दाक्ष ईरितः ।

पदमगर्भश

शरीरभृत

स्वसदृशेन सुरभिकोमलेन आसनपद्मेन उपासकमानससरसिजेन वा गर्यिते स्वान्तरवस्थाप्यत् इतिपद्मगर्भश् ।

"दहरं पुण्डरीकं वेश्य"[१] इत्यादि ।

"सरसिजासनसन्निविष्टः

ईदृशेन शुभाश्रयेण स्वशरीरभूतमुपासकं पुष्णातीति शरीरभृत् उपास्यगुणैर्हि तेषां पोषः ।

महर्द्धिः - ओं महर्द्धये नमः

ऋद्धो -

अथ विभूतितोऽपि स एव विव्रियते, तद्योगदोमहामनिस्सीमविभूतिः महर्द्धिः तत्समृद्ध्या यस्समृद्ध स्त्वृद्ध उच्यते ।

वृद्धात्मा - ओं वृद्धात्मने नमः

महाक्षो - ओं महाक्षाय नमः

गरुडध्वजः -ओं गरुडध्वजाय नमः

इमं महान्तं महिमानं चुलक्यन्निव वृद्धः -प्रवृद्धः आत्मास्वरूपम् वृद्धात्मा महाक्षः महान्पूज्यः अक्षो यस्य सः महाक्षः वहनेन रथावयवसाम्यात् अक्षः त्रयीमयः तार्क्ष्यः, सहि गरुडवाहनस्य औपवाह्यः ? स एव ध्वजो यस्य सः गरुडध्वजः तद्धि, सर्वै[illegible] चिह्नम् ?

अतुलश् - ओं अतुलाय नमः

शरभो - ओं शरभाय नमः

भीमः - ओं भीमाय नमः

इत्थमप्रतिमतया नास्ति तुला उपमा अस्येति अतुला ।

स्वमर्यादातिवर्तितः शृणातीति शरभः ।

अतः ते तस्मात् बिभ्यतीति भीमः

"भियष्पुग्वा" इति मक् प्रत्ययः उणादि[1]

"भीमादयोऽपादाने" तद्गीता हि, वाय्वादयो देवाः स्वमर्यादां नातिवर्तन्ते यथा-

"भीषाऽस्माद्वातः पवते"[2]

"यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्महद्भयं वज्रमुद्यतम्"[3]

समयज्ञो

हविर्हरिः

अग्न्यादीनां च समयमूर्ध्वाग्निज्वलनादिकम् यो जानात्यधिकारं च समयज्ञः स कीर्तितः ।

---

१- पा०अ० ३।४।७४

२- तै०उ० ८

३- कठो० २।६।२

समयं श्रुतिसिद्धं यो ज्ञात्वा तेभ्यः श्रियं मुदा ।
तद् हुतं हविवस्तैश्च दीयते स हविस्स्मृतः ।
हरतीति हरिर्विघ्ना नन्नादानेषु नित्यशः ।
हविर्हरि रिति प्रोक्तो ह्यष्टाणश्चैकनामतः ।।

सर्वलक्षणलक्षण्यो - ओं सर्वलक्षणलक्षण्याय नमः

अथ लक्ष्मीपतिमूर्तिः -साक्षात् लक्ष्मीसततालिङ्गन सौभाग्यसूचकास्सर्वे-लक्षणलक्षणो ज्ञाने साधुः सर्वलक्षणलक्षण्यः ।

लक्ष्मीचरणचिह्नितः

लक्ष्मीवान् - ओं लक्ष्मीवते नमः

लक्ष्मीवान् तथैव लक्ष्म्या नित्ययोगवान् १ यथा-
क्ष्यदेवोपरिणये लीलयैव समर्पयन् ।
प्रकाशयन्ननादित्यमात्मनाप्रकृतेस्सह ।
मत्करैरनुविद्धेयं प्रकृतिः प्राकृतैरहम् ।

इति प्रकृतिः जाताम्माता श्रीः ।

समितिंजयः

विक्षारो

रोहितो

मार्गो

यथोक्तभक्तप्रणयादारणात् विदार: ।

कमलनाभित्वात् रोहित:

उपासकैर्मार्ग्यत् इति मार्ग: ।

दामोदर: - ओं दामोदराय नम:

सह: -

सकललोकाधारतया आर्षवचनानुसारात् दामानि लोका: उदरे अस्य इति वा तदनुसाराद्देवसुखशांसित्वदमगुणयोगात् वा, इत्थं लक्ष्मीस्पृहणीयचातुरी कल्पेऽपि, संश्रितवात्सल्यात्, यशोदादामनि गलितजलतया, दामानि रज्जव: उदरे अस्येति वा दामोदर:।

दामानि लोकनामानि यान्ति यस्योदरान्तरे ।

तेन दामोदरो देव: ,इति ।

महीधरो - ओं महीधराय नम:

महाभागो - ओं महाभागाय नम:

स एव भूभारधरणेन महीधर: ।

वल्लवीनीलाणोडशसहस्रदिव्यकन्यकारुक्मिणीसत्यभामाजाम्बवतीप्रभृतीनां स्वयंवरसौभाग्यवत्त्वात् महाभाग: ।

वेगवान् - ओं वेगवते नमः

अमिताशनः - ओं अमिताशनाय नमः

मनुष्य धर्मलीले बाल्ये पि दुर्वारपरमैश्वर्यप्रसरत्वात् वेगवान् अतिशायने मतुप् ।

इन्द्राय कल्पितं गोपैरमितं चाशनं स्वयम् ।
भुक्तवान्यश्च निश्शेषं प्रोच्यते सो मिताशनः ।

उद्भवः - ओं उद्भवाय नमः

क्षोभणः -

स्वदामबन्धानुसधायिनं भवबन्धनिर्धूननेन उद्गतो भवोस्मादिति उद्भवः अन्यान् बन्धाहान्, बन्धनोन्च प्रकृतिं क्षोभयतोति क्षोभणः ।

देवः -ओं देवाय नमः

श्री गर्भः - श्री गर्भाय नमः

परमेश्वरः - ओं परमेश्वराय नमः

मायापाशेनव्याघ्रवराहादिवत् जीवान् बध्वा, दीव्यति क्रीडतीति देवः एवंप्रायभोगक्रीडासाहित्येन वर्धनीया स्य श्रीरिति श्रीगर्भः ।

"विष्णोरेणा नपायिनी"[1]

1- वि०पु० १

व्यवसायो -- ओं व्यवसायाय नमः

अतिशयेन सीयते बध्यते ऽस्मिन् ज्योतिश्चक्रमिति व्यवसायः अधिकरणे घञ् नक्षत्राधारव्योमशरीरत्वात्, अतो हि "गगनमूर्तये" इति मवचकृतं दैवम्" इतितद्ध्यानम्"

व्यवस्थानः - ओं व्यवस्थानाय नमः

संस्थानः - ओं संस्थानाय नमः

स्थानदो - ओं स्थानदाय नमः

तन्मूल कालः कलामुहूर्ताद्यात्मातत्रैव व्यवतिष्ठत् इति व्यवस्थानः। सर्वमेतस्मिन् सन्तिष्ठते समाप्यत् इति संस्थानः स एव "परमपदप्राप्तिहेतवे" इति मन्त्रवर्णात् स्थानदः।

ध्रुवः - ओं ध्रुवाय नमः

परर्द्धि - ओं परर्द्धये नमः

स खलु तुङ्गपदप्रदानेनावाचीनं ध्रुवमपि ध्रुवीचकार अतो ध्रुवः अस्य सर्वव्यापकत्वं तत्त्वम्।

अथ मृतसंजीवनं रामवृजान्तः प्रस्तूयते, परस्यापि स्वस्य अवरतत् एकगुणैकदेश निदर्शनकरणेन सर्वैश्वर्यादपि परा अतिशयिताऋद्धिः कल्याण-गुण समृद्धिः अस्येति परर्द्धिः।

परमस्पष्ट:

तुष्ट:

स्पष्टप्रत्यदादृष्टस्वपारम्य: ,यथा

व्यक्तमेष महायोगी परमात्मा सनातन:[1]

सकलमनुष्याधिकार दाशरथित्वजात्पालनलोभेन अधिकृताधिकारात् परत्वादपि अतिशयेन तुष्यति प्रीणातीति तुष्ट: ।

पुष्ट: -

शुभेक्षण:

एवं महागुणै: परिपूर्ण: पुष्ट: ।

एवं विधैश्वर्यशीलातिशय पिशुनशीतलविशालोदारदीर्घराजीवलोचन: शुभेक्षण: ।

रामो - ओं रामाय नम:

विरामो - ओं विरामाय नम:

सर्वैर्गुणैरुपवशीकृत: रम्यते अनुरज्यते स्मिन् इति वा तद्वशीकृतेष्वयं रमते रज्यतीति वा राम: यथा-

रामो रमयतां श्रेष्ठ[2]

गुणाभिरामं रामं च[3]

---

१- रा०यु० ११४।१४

२- रा०अ० ५३।१

३- भा०सं० ५८।४२

वरप्रदैः ब्रह्मादिभिः वरैरवध्यत्वादिभिः लब्धवरैश्च रावणादिभिः विरम्यते उपरम्यते स्मिन् इति विरामः ।

विरतो -

मार्गो-

निसर्गनिरपेक्ष्येण कृपणाद्राज्यादेः विरतः यथा -

"न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति"[1]

भरद्वाजादिमुनिभिः मार्ग्यते इति मार्गः

नैयो नयः

सुहृदां नियोगार्हतया नेतुमर्ह इति नेयः
तैः च तथास्मिन्नीयन्त इति नयः तेह्याहुः ?
"रक्षितव्यास्त्वया शश्वद्गर्भभूतास्तपोधनाः"[2]

तथा-

"पाण्डवानां भवान्नाथो भवन्तम्वाश्रिता वयम्"

---

१- रा०अ० १९। ३२

२- रा०आ० १।२०

अनय: - ओं अनयाय नम:

स एव असुहृद्भि: न नयो स्यासीदिति अनय: यथा रावणेन-

निरुक्ति-

असुहृद्भिर्नयो यस्य नास्ती त्यनय उच्यते ।
अथवा जगतां यस्मान्नन्योस्ती त्यनयो थवा ।।

वीर: - ओं वीराय नम:

शक्तिमतां श्रेष्ठ- ओं शक्तिमतां श्रेष्ठाय नम:

रक्षासामतिभयचलनहेतुत्वात् वीर:
शक्तिमतां सुरादीनामतिशयेन प्रशस्य इति शक्तिमतां श्रेष्ठ: यथाह

परशुपरिकर्मा राम: "
"अक्षयं मधुहन्तारं जानामि त्वां सुरेश्वरम्"[1]

धर्मो - ओं धर्माय नम:

धर्म विदुत्तम:

अभ्युदयानि:श्रेयसाभ्यां सर्वं साक्षाद्धरतीति धर्म: ।
"अर्तिस्तुसुहसुघृदाद्भुमायावापदियदिनी" भ्यो इति मन् प्रत्यय:
"ब्रह्मविदां वर: लोकानां त्वं परोधर्म:"[2] इति लक्ष्मणश्च धर्मवित
धर्मज्ञेषु तेभ्यो वा, उत्तम: उत्कृष्टतम: इति धर्मविदुत्तम: ।

---

१- रा०बा० ७६।१७
२- रा०सुं० ९०।१४

यथा -

सर्वदा भिगतस्सद्भि: समुद्र इव सिन्धुभि:[1]

निरुक्ति -

वसिष्ठाद्युपजीव्यो यो धर्मे धर्मविदुत्तम: ।

वैकुण्ठ: - ओं वैकुण्ठाय नम:

सर्वेषां संश्लेषयिता वैकुण्ठ:

'कुठि गतिप्रतिघाते' स चात्र संश्लेषविघात: स च विगतो येषान्ते विकुण्ठा: तेषामेष: वैकुण्ठा: ।

'मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना ।
वायुश्च तेजसा सार्द्धं वैकुण्ठत्वं ततो मम ।।[2]

पुरुष - ओं पुरुषाय नम:

स यत् पूर्वोऽस्मात् सर्वस्मात् पाप्मन औषत्तस्मात्पुरुष: इति परमपावनत्वात् पुरुष: ।

'पावनस्सर्वलोकानां त्वमेव रघुनन्दन'[3]

'पृ पालनपूरणयो'
'पुर: कुषन्' इति कुषन्प्रत्ययान्तो पुरुष: सहिरामस्सर्वथा पुरुष इष्यते ?

---

1- रा०सं० १६

2- मा०शा० ३४३। ५०

3- रा०उ० ८२। ६

प्राण: - पूर्ववत्

प्राणद: - पूर्ववत्

प्रणम: - ओं प्रणमाय नम:

पृथु: - ओं पृथवे नम:

"प्रणामयति"

इति श्रौत्या निरुक्त्या स्वगुणैश्चराचरनामनात् प्रणम: ।

"हृदयान्याममन्थेव जनस्य गुणवत्तया"[1]

यशोविस्तारवत्तया, प्रथते प्रख्यातो भवतीति- पृथु:

"प्रथ प्रख्याने" कु प्रत्यय:

"पृथुर्नाम: पार्थिवात्मज:"[2]

"रामो नाम जनै: श्रुत:"

निरुक्ति-

यशोविस्तारवत्त्वाच्च पृथु रित्युच्यते बुधै: ।

हिरण्यगर्भ: - पूर्ववत्

शत्रुघ्नो- ओं शत्रुघ्नाय नम:

विषयेषु विदोपणावेणा रावणवत् शत्रुमिन्द्रियवर्गं विवेकशरै: हन्ति शमयतीति शत्रुघ्न: ।

१- रा०अ० २५।२

२- रा०सुं०८

"अमनुष्यकर्तृके च" इति टक् "गमहन०"[1] इत्यादिना उपधालोप:

"हो हन्ते"[2] इति कुत्वम्

दशेन्द्रियाननं घोरं यो मनोरजनीचरम् ।
विवेकशरजालेन शमन्नयति योगिनाम् ॥[3]

व्याप्तो -ओं व्याप्ताय नम:

वायुर् - ओं वायवे नम:

शत्रुमित्रादिषु वात्सल्याविशेषात् व्याप्नोतीति- व्याप्त:
स्वयमेव तत्र तत्र तांस्तान् वातिगच्छतीति वायु:

अधोक्षज:

ऋतु-

स्वममृतोदधिवत् स्वैस्सदोपयुज्यमानोपि, निरुक्तानुसारात् अधो न क्षीयते जात्विति वा जातु अधोऽक्षीयमाण: प्रादुर्भूत् इति वा अधोक्षज:

यथा- "अक्षय्यं मधुहन्तारं जानामि त्वां सुरोत्तमम्"[4]
"ऋच्छतीति ऋतु: प्रोक्त: सर्वोल्लासकरैर्गुणै:"

---

१- पा०अ० ६।४।९८
२- पा०अ० ७।३।५४
३- सात्वतसंहितायाम्
४- वा० ७६।१७

सुदर्शन

काल:

गुणप्रभावानभिज्ञानामपि दर्शनमात्रमेवास्य शोभनमिति सुदर्शन:

यथा- स्वंमूर्तैर्गुणैरात्मनि चराचरसंकलनात् काल: ।

परमेष्ठी - ओं परमेष्ठिने नम:

परिग्रह:

उग्र:

संवत्सरो

दक्षो -

इत्थं राक्षसाखेटकेन, जगत्संरक्षणेन च अत्र विहृत्य पुनश्च परमे स्थाने तिष्ठतीति परमेष्ठी ।

"परमे कित्" इति इनि प्रत्यय:

"अम्बाम्ब०"[1] इत्यादिना षत्वम्

"हलदन्तात्"[2] इति सप्तम्या अलुक् यथा

एवमेण महाबाहुरिक्ष्वाकुकुलवर्धन: ।

रावणं सगणं हत्वा दिवमाक्रमिता प्रभु: ।।

---

१- पा०अ० ८।३।९७

२- पा०अ० ६।३।९

विश्रामो -

विश्वदक्षिण:

अथ शीलदुस्साधासाधुसाधकसंहाराधिकार: पातालशयन: कल्की च युगावसाने पापातिप्रसंगिषु संकीर्णवर्णाश्रमव्यवस्थेषु विश्राम: ।

अपचरत्सु कथं हितकारी ? तत्राह विश्वदक्षिण: विश्वस्मिन्निष्टा - निष्ट कारिण्यविशेषेण दक्षात इति विश्वदक्षिण: ।

विस्तार: - ओं विस्ताराय नम:

कलिप्रबलसंहारेण कृतं प्रवर्तयितो स्माद्वेदमर्यादा प्रथत इति विस्तार: ।

अर्थो- ओं अर्थाय नम:

अनर्थो - ओं अनर्थाय नम:

एवमक्ते विशिष्टाधिकारिणस्सम्यग्ज्ञानिनस्स्वयं प्रयोजनत्वात् अर्थ:

"उषिकुषिगार्तिभ्यस्थन्" इति थन् प्रत्यय:

मन्दसुकृतेनार्थार्थिना निर्व्याजं नार्थ्यत इति अनर्थ: ।

स ह्यर्थव्याजेनैनेमर्थ्यते यथा-[1]

"अर्थैकपिङ्ग" इति

"ये च शिष्टास्त्रयो भक्ता: फलकामा हि ते मता:" इति च ।

---

१- वि०ध० ४३।४७

महाकोशो - ओं महाकोशाय नमः

महाभोगो - ओं महाभोगाय नमः

महाधनः - ओं महाधनाय नमः

सदा सर्वेभ्यस्सर्वथा दानेप्यदायत्वात्,महान्तःशङ्खपद्मादिनिधि-

रत्नाकररोहणगिरिखिरादयः कोशाः भाण्डागाराणि, अस्येति महाकोशः

अर्थसाध्यः ।

काम भोगोपि महानस्मादिति महाभोगः ।

अनिरुप्यातिकृपणप्रदेयमनन्तं धनमस्येतिमहाधनः सर्वं चैतत्

प्रहलादः प्राह।

स्थविष्ठो -ओं स्थविष्ठाय नमः

भूर् - ओं भुवे नमः

धर्मयूपो - ओंधर्मयूपाय नमः

अथ अनिर्वेदोदाहरणम्- तत्र श्रुतिपुराणप्रसिद्धशिंशुमाराकृतितारा-

प्रकारेणाति स्थूल इति स्थविष्ठः ।

ध्रुवानुबन्धेन सर्वाधारो भवतीति भूः ।

"तस्य पुच्छे ध्रुवः स्थित" इति[१]

धर्मतत्त्वं शिरोवयवतया यातीति - धर्मयूपः

"यु मिश्रणे" धातुः "कुयुभ्यान्च" इति पप्रत्ययः बहुलवचनाद्दीर्घश्च

"धर्मो मूर्धानमाश्रितः"

१- विष्णुपुराणे

महामख:

नक्षत्रनेमिर्

धर्मशरीरतया पूज्यो यज्ञो स्यावयव इति महामख: यथा

"यज्ञो धर्मश्च विज्ञेय: इति।

यन्नक्षत्रात्मकं चक्रं ज्योतीरुपमनामयम्

यस्मिन्नित्यं भ्राम्यति भ्रमन्तमनुयाति च

नक्षत्रनेमि विज्ञेयो नवाणों भ्रमनायक:।

क्षाम: - ओं क्षामाय नम:

दाम: - ओं दामाय नम:

स्वमखिलभुवनमारमनायासेन दामते सहते वहतीति दाम:।

अवान्तरक्षये नक्षत्रान्तरै: क्षीणास्तिष्ठतीति क्षाम:।

समीहन: - ओं समीहनाय नम:

अथ सृष्टौ सर्वान् सर्वदा स्वेषु अधिकारेषु समीहयतीति समीहन:।

"त्वां भूतान्युपपर्यावर्तन्ते" इति आरणम् उभोगे

इज्याफलस्य भूरेणा इज्या चात्र प्रतिष्ठिता।

यज्ञ - ओं यज्ञाय नमः

इज्यो - ओं इज्याय नमः

यज्ञतत्साधनतत्फलावधित्वेन प्रतिपादितः अतः यज्ञः

"यज्ञो वै विष्णुः"

कामयिकारैरिन्द्रादिद्वारा इज्यामर्हतीति इज्यः।

वर्णाश्रमाचारवता " इत्यादि

महेज्यश्च - ओं महेज्याय नमः

अकामहता महती इज्या अस्याव्यवधानेनेति महेज्यः।

"ये तु सर्वाणि कर्माणि"[1]

सत्रम् - ओं सत्राय नमः

सतांगतिः - ओं सतांगतये नमः

दीर्घकालबहुयजमानकर्मासचोदनालक्षणं सत्रम् तत्र चराध्यतया

सततं सीदतीति सत्रम् सीदतेः गतिकर्मणः।

स्वधर्मेण प्रवृत्तिधर्मनिष्ठानां गतिः अथ सतां निवृ-त्तिधर्मनिरतानां

गतिं प्राप्य इति सतांगति।

---

1- गीता 12। 6

निर्धूतदोषपङ्कानां यतीनां संयतात्मनाम् ।
स्थानं तत्परमं विप्र पुण्यपापपरिक्षये[1] ।

सर्वदर्शी -ओं सर्वदर्शिने नमः

निवृत्तात्मा-ओं निवृत्तात्मने नमः

सर्वज्ञो - ओं सर्वज्ञाय नमः

सर्वौ द्विविधावपि धर्मौ अध्यदायितुं शीलमस्येति सर्वदर्शी तत्र निवृत्तिधर्माचार्यो नरनारायणादिः परमवैराग्य ख्यापनाय विषयेभ्यः प्रत्याहृतमनाः निवृत्तात्मा ।

'अन्तर्निविष्टभावं च' मन्त्रे च
'आत्मध्यानपरायणाय' इति
तथा स्वात्मना त्मानं जानातीति सर्वज्ञः ।
'युञ्जानं च स्वमात्मानं परस्मिन्नव्ययेपदे' इति ।

ज्ञानमुत्तमम् - ओं ज्ञानायोत्तमाय नमः

सुव्रत - ओं सुव्रताय नमः

ज्ञायते स्मिन् सर्वः परो वैष्णवो धर्म इति ज्ञानमुत्तमम् ।
'पठन्तमनिशं शास्त्रं पञ्चरात्रपुरस्सरम्'
इति न्यायेन केवलपरार्थत्वात् शोभनं व्रतमस्येति सुव्रतः ।

---

१- वि०पु० २।८।९९

सुमुख: -ओं सुमुखाय नम:

जपादावविकृतप्रसन्नमनोहरमुखत्वात् सुमुख: ।
"कृष्णाय कमलदलामलनेत्राय" इति तन्मन्त्रवर्ण: ।

निरुक्ति-

ध्यातृणां विषये यस्य सुप्रसन्नं मनोहरम् मुखमस्तीति सुमुख: ।

सुघोष: - ओं सुघोषाय नम:

सुखद: - ओं सुखदाय नम:

औपनिषद: स्वाध्यायघोष: अस्येति सुघोष:
एवं सदाचारसमाध्यनुष्ठापनेन तन्निष्ठेभ्य: फलं परमसुखं ददातीति सुखद: ।
सुखं बहु ददातीति सुखद: परिकीर्तित:"

सुहृत् - ओं सुहृदे नम:

मनोहरो - ओं मनोहराय नम:

जितक्रोधो- ओं जितक्रोधाय नम:

कुत इदं परोपकारव्यसनित्वम् यत: सुहृत् ।
अनुपकारिण्यपि किमस्य भविष्यति ?
किं करवाणीति शुभाशंसि शोभनहृदयत्वं सुहृत्त्वम्"
एवं निसर्गसौहार्देन तेषां मनोहरतीति मनोहर: ।

"हरतेरनुधमने च्"[१]

जितश्च तेषां क्रोधादयो नेनेति जितक्रोधः ।

विदारणः - ओं विदारणाय नमः

स्वापनः - ओं स्वापनाय नमः

दिव्यहेतिभिः राहुमुखान् विदारितवानिति विदारणः । नष्टशिष्टानपि चारुचतुरस्मितमधुरकटाक्ष भ्रूविलासैः स्वापयति परवशयतीति स्वापनः ।

"मदविह्वलनेत्रं च देवमुद्भिन्नयौवनम्" इति ।

स्ववशो - ओं स्ववशाय नमः

व्यापी - ओं व्यापिने नमः

नैकात्मा - ओं नैकात्मने नमः

तेषु सुप्तेषु स्वकीयैस्सह स्वैरविहारात् स्ववशः । सुरासुरमन्दरवासुकिप्रभृतिषु शक्त्याप्यायनाय व्यापनात् व्यापी ।

तदातनैः ब्राह्मकौर्ममोहिनीमुखैः रूपैः नैकात्मा ।

मथनधारणवैरिविदारणसुधादानाद्यनेककर्मा नैककर्मकृत ।

---

१- पा०अ० ३।२।६।

वत्सरो - ओं वत्सराय नमः

वत्सलो - ओं वत्सलाय नमः

वत्सी - ओं वत्सिने नमः

अथ धर्मात्मा पुरुषार्थव्यवस्थापनाय सर्वान्तर्वसतीति वत्सरः ।
"वसेश्च" इति सरन् प्रत्ययः उणादि ।
वत्सान् स्वोत्सुकान् कामयते इति
नित्यपोष्यात्म्गुणवद्वत्सभूयस्त्वतस्सदा ।
वत्सी स्याद्धि विशेषेण षडर्णो गोप्रदोमनुः ।।

धनेश्वरः - ओं धनेश्वराय नमः

तदादिष्टधनादाने आशुकारित्वात् धनेश्वरः

निरुक्ति-

आशुकर्माणि ह्यश्रोतेर्वरट् ?

धर्मगुब - ओं धर्मगुपे नमः

धर्मकृद - ओं धर्मकृते नमः

धर्मी - ओं धर्मिणे नमः

सत - ओं सते नमः

द्वावप्यर्थकामौ दुर्विषयान्निवर्त्य ताभ्यां हितधर्मरक्षणात् धर्मगुप् ।

"साधुमार्गे स्थितानां च संयच्छन्तं धिया च तौ" इति
एवं स्वान् धार्मिकयन्नकारणादनुग्रहहेतुं धर्मं करोतीति धर्मकृत् ।
प्रसिद्धो पि धर्मो स्य सर्वसाधारणोपकरणमिति धर्मी ।

उक्तधर्मप्रशस्तत्वात् - सत् ।

"प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते"[1]

अविज्ञाता - ओं अविज्ञात्रे नमः

सहस्रांशुः - ओं सहस्रांशवे नमः

तत्र साधुष्वपराधाननन्तानपि दृष्ट्वा न दण्डयति क्षमते चेति नैतावदेव किंतु तेषाम् अविज्ञाता ।

"उच्यमानो पि परुषं नोत्तरं प्रतिपद्यते"[2]

प्रपन्नापराधापरिगणनं गुण एव

निरुक्ति-

प्रपन्नकृतपापानां किंचिदप्यविचारणात् ।
अविज्ञातेति कथितः बुधैस्तद्गुणपारगैः ।।
अथ सर्वज्ञः सहस्रं सहस्रसंख्याकाः अपरिमिताः अंशवः तदुपलक्षाणि ज्ञानानि,अस्येति सहस्रांशुः ।

"दोषो यद्यपि तस्य स्यात्"[3]

"अपि चेत्सुदुराचारो भजते मामनन्यभाक्"[4]

---

१- गी० १७।२६

२- रा०अ० १।१०   ४- गी० ९।३०
३- रा०यु० १८।३।

विधाता - ओं विधात्रे नमः

कृतलक्षणः - ओं कृतलक्षणाय नमः

प्रपन्नापराधविषये, सत्यां हि स्वक्षमायां, पापफलनियतृतन्नियामकयमतधातनादीनामकिञ्चित्करतायें तेषाम् अर्थिस्वाधीनताप्रख्यापनाय तानपि विदधातीति विधाता ।

यद्येष दोषसहः, किं तर्हि हेयाद्भागादुपादेयस्य व्यावर्तकम् तत्राह कृतलक्षणः ।

कृतं हि तेन लक्षणमुपादेयानाम् ।
"मित्रभावेन संप्राप्तम्"[1]
"सम्यग्व्यवसितो हि सः"[2]

"भवतां ममतामत्र विष्णुसंश्रयमुद्रया ।
विनाऽऽज्ञाभङ्गकृन्नैव भविष्यति नरः क्वचित् ।।

सत्त्वस्थः - ओं सत्त्वस्थाय नमः

सिंहो - ओं सिंहाय नमः

किंच कर्मणो निमित्तस्याप्यभावाच्च यमाधप्रधृष्या कुतस्तदभावः यस्माच्च तेषाम् सत्त्वस्थः ।

१- रा०यु० १८।३
२- गीता ९।३०

"सुपि स्थः"[1] इति कः "हृदये स्थितः"

किंकरा दण्डपाशौ वा न यमो न च यातना:।
समस्तास्तस्य यस्यात्मा केशवालम्बनस्सदा[2]

तथा न्यदुक्तं नरसवमेन इक्ष्वाकुणाभनितयुतेन नूनम् ।
ये विष्णुभक्ता: पुरुषा पृथिव्यां यमस्य ते निर्विषया भवन्ति"[3]

यदिदमविदन्तो यमादय: तान्प्राकृतवत् धर्मर्थेण तान्हिनस्तीति-
सिंह: । यथा-

प्रभवति संयमने ममपि विष्णु[4]" इति

भूतमहेश्वर: - ओं भूतमहेश्वराय नम:

यतो भूतानां ब्रह्मयमादय ईश्वरा:,अयं तु तेषामपि ईश्वरतया
महांश्चासौ ईश्वरो नियन्ता चेति भूतमहेश्वर: ।

"नरके पच्यमानस्तु यमेन परिभाषित: ।
किं त्वया नार्चितो देव: केशव: क्लेशनाशन:" इत्यादि"

---

१- पा०अ० ३।२।४

२- वि०पु० ३।७।२८

३- वा०पु०

४- वि०पु० ३।७।१५

आदिदेवो - ओं आदिदेवाय नमः

महादेवो - ओं महादेवाय नमः

तेषामप्यादिः कारणं च असौ देवः तदभिभवपटुप्रतापतया द्योतमानश्चेति आदिदेवः ।

"भीषास्माद्वातः पवते"[१]

तैः क्रीडनकैः कन्दुकादिभिरिव क्रीडयतीति महादेवः ।

देवेशो - ओं देवेशाय नमः

देवभृत् - ओं देवभृते नमः

गुरु - ओं गुरवे नमः

तेषां च यथार्हविनियोगक्षमतया देवानां ब्रह्मादीनाम् ईशः स्वामीति-देवेशः ।

तथा तान् देवान्बिभर्तीति देवभृत् ।

तेषां वेदैस्स्वाधिकारबोधनाद्गुरुराचार्य इति वा

कालेनानवच्छेदात्, सर्वेषामपि गुरुः अधिक इति वा गुरुः ।

---

१- तै०उ० आ० ८।१

उत्तरो - ओं उत्तराय नमः

गोपतिर् - ओं गोपतये नमः

एवं ब्रह्मादेरासुरापदुद्धरणतया, तं विपदमुत्तरन्त्यस्मादीति वा ब्रह्मादिस्तुत्यनन्तरं देवकार्यार्थमुत्थिततर इति वा उत्तरः ।

'एवं स्तुतस्स भगवान् पुरुषस्सर्वतोमुखः[1]
जहौ निद्रामथ तदा देवकार्यार्थमुत्थितः' इति

मन्त्रवर्णानुगुण्येन गवाम् अशेषच्छन्दोमाणवेणाणां वाचां पतिः स्वामी निर्वाहकः इति गोपतिः ।

गोप्ता

ज्ञानगम्यः

एवं सर्व विद्यापालनात् -गोप्ता ।

'सर्वविद्येश्वराय' इति तन्मन्त्रवर्णः ।

परविद्यावेद्यः समाधिगम्य ज्ञानगम्यः ।

---

१- भा०शा० ४८।४७

पुरातन:- ओं पुरातनाय नम:

नेदं विद्याप्रद्योतनम् अद्यैव किं तु प्रतिकल्पम् इति पुरातन: ।

"सायंचिरम्[१]" इत्यादिना ट्युट्युलौ तुडागमश्च

निरुक्ति-

विद्याप्रद्योतनाद्योऽसौ प्रतिकल्पं पुरातन: ।

---

१- पा०अ० ४।३।२३

<u>शरीरभूतभृद्</u> - ओं शरीरभूतभृते नमः

शरीरभूतं तत्त्वजातं बिभर्तीति शरीरभूतभृत्

'तच्छिरः'

'तस्य मूर्धा समभवत् द्यौस्सनक्षत्रदेवता' इत्यारभ्य -

'उतङ्कयशिरः कृत्वा नानामूर्तिभिरावृतम्' इत्यन्तम्[1]

'यत्तु तत्कथितं पूर्वं त्वया हयशिरो महत् ।
हव्यकव्यभुजो विष्णोरुदक्पूर्वे महोदधौ ।।[2]

<u>भोक्ता</u> - ओं भोक्त्रे नमः

<u>कपीन्द्रः</u> - ओं कपीन्द्राय नमः

अथैवं स्वव धितवेदविहितकर्मप्रवर्तकः पुरा रामः स्वविसदृशलीला-मनुजावतारे स्वदासानां विसदृशतरकपिरूपं प्रपन्नानां देवानामिन्द्रः कपीन्द्रः ।

सर्वलोकेश्वरस्साक्षाल्लोकानां हितकाम्यया ।
सर्वैः परिवृतो देवैर्वानरत्वमुपागतैः[3] ।।

<u>निरुक्ति</u>-

कपिरूपं प्रपन्नानां देवानामीश्वरत्वतः ।
कपीन्द्र इति विख्यातः सप्ताणों मनुनायकः ।।

---

१- भा०शा०३४८-४६

२- भा०शां ३४८।३

भूरिदक्षिण: - ओं भूरिदक्षिणाय नम:

स एव जगदाचार्यकाय हयमेधादिभि र्यजमान: भूरिदक्षिण: ।

अश्वमेधशतैरिष्ट्वा[1] इत्यादि

निरुक्ति-

हयमेधादिभिर्यज्ञैर्जगदाचार्यकाय वै ।

यजमानस्स विज्ञेयस्सर्वदा भूरिदक्षिण: ।।

सोमपो - ओं सोमपाय नम:

तत्रैव सोमपोऽथी सोमप: सोमं पिबतीति सोमप: ।

यत्किञ्चिद्धूयते बह्नौ हविर्मन्त्रैर्विधानत: ।

तत्सर्वममृतं कृत्वा विष्णवे संप्रयच्छति ।।

"अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च"[2] ।

निरुक्ति-

हयमेधे सोमपो य: सोमप: परिकीर्तित: ।

---

१- रा०बा० १।६४

२- गीता ६।२४

मृतप: - ओं अमृतपाय नम:

हवि: परिणामरुपम् अमृतं स्वयमेव पिबति चेति,अमृतप: स्वानुष्ठानानुविधायिभ्य: स्वानुभवरुपममृतं परमे व्योम्नि पातीति वा अमृतप: ।

"यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त"[1]

निरुक्ति-

परिणामोस्य हविषं पीयूषमिति चोच्यते ।
तत्पानात्स्यादमृतप: परमे व्योम्नि वा स्थित: ।
मुक्तेभ्यो य: स्वानुभवं पातीत्यमृतप: स्मृत: ।।

सोम: - ओं सोमाय नम:

"अमृतस्यैष सेतु:"[2]
"यस्य छाया मृतम्" इति ।
स्वस्मै, स्वानुभवितृभ्यश्च अमृतायमान: सोम: ।
सोमशब्दो ह्यमृतवाची वर्तते ।
तृतीयस्यामितो दिवि सोम आसीत्[3] ।
"स खल्वमृतोपम:"

१- तै०उ०६।१५
२- मु०उ० २।२।५
३- अष्ट ३।१।

महता तपसा राम महता चापि कर्मणा ।[1]
राज्ञा दशरथेनासि लब्धोऽमृतमिवामरैः" इति

"अमृतस्येव नातृप्यन् प्रेक्षमाणा जनार्दनम् ।[2]
शान्तिसमृद्धममृतम्" इति च

निरुक्ति-

सोमः सुवायमानत्वान्मुक्तानां परिकीर्तितः ।

पुरुजित् - ओं पुरुजिते नमः

"सत्येन लोकान्जयति दीनान् दानेन राघवः ।[3]
गुरून् शुश्रूषया वीरो धनुषा युधि शात्रवान्"

इति बहूनां जयात् पुरुजित्

निरुक्ति-

लोकान् दीनान् गुरून् शत्रून् सत्यदानानुवर्तनैः ।
धनुषा जितवान्यश्च पुरुजित् स स्मृतो बुधैः ।

---

१- रा०बा० ६६।३

२- तै०उ०शि० ६।२

३- रा०अ० १२।२६।५

पुरुसत्तम: - ओं पुरुसत्तमाय नम:
विनयो - ओं विनयाय नम:

स्वगुणामृतसमुद्रपिपासुषु हनुमदादिषु महत्सु अस्ति तम इति पुरुसत्तम: ।

निरुक्ति-

महत्स्वस्तितमत्वाधो ह्यान्जनेयादिषु स्वयम् ।
पुरुसत्तम आख्यातो नवार्ण: स्वस्तिदो मनु: ।

ओं विनयाय नम:

मारीचादयो पि वीर्यादिना स्वाङ्गिनीयन्ते दम्यन्ते इति विनय: ।

निरुक्ति-

कुम्भकर्ण महाकायखरमारीचरावणा: ।
दम्यन्ते विक्रमैर्येन विनय: स उदाहृत: ।।

जय: - ओं जयाय नम:

आश्रितैर्जीयिते विधेयी क्रियते इति जय: ।

यथा-

"आज्ञाप्योऽहं तपस्विनाम्[1]"

"ततो नारायणो विष्णु नियुक्तस्सुरसत्तमै:" इति ।

निरुक्ति-

आश्रितै जीयिते यस्माद्विधेयी क्रियते जय: ।

सत्यसन्ध: - ओं सत्यसन्धाय नम:

तेषु सत्या सन्धा प्रतिज्ञा अस्येति सत्यसन्ध: ।

यथा- अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् ।[2]
न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषत: ।

"सत्यसन्धो जितेन्द्रिय:[3]" इति च ।

निरुक्ति-

"सत्या प्रतिज्ञा यस्येति सत्यसन्ध: स उच्यते" ।

---

१- रा०वा० ३।३७

२- रा०वा० १०।१९

३- रा०मु० ३९ ।

दाशार्हः -ओं दाशार्हाय नमः

दाशः- दानम् भक्तैः स्वस्मै स्वात्मनिवेदनरूपम्, तेभ्यो वा स्वात्मसमर्पणरूपम् अर्हतीति -दाशार्हः । "अर्ह" इति अच् प्रत्ययः । एवं महार्य इत्यादि कृष्णात्वे दशार्हाणामपत्यत्वाद्वा ।

निरुक्ति-

आत्मनो वा र्पणं भक्तैस्तेभ्यो वा स्वात्मनो र्पणम् ।
दाशस्तमर्हति च यो दाशार्हः स तु कीर्तितः ।

सात्वतांपतिः - सात्वतांपतये नमः

ततः क्विपि सति, णिलोपे च कृते, सात्वतः भागवतास्तेषां पतिः सात्वतांपतिः ।

सातयति-सुखयति आश्रितानिति सात्-परमात्मा, स एषामस्तीति वा सात्त्वतः सात्त्वन्तो वा महाभागवताः, तेषां पतिः-स्वामीति सात्वतांपतिः ।

निरुक्ति-

ये सात्त्वतो भागवतास्तेषां यः पतिरीश्वरः ।
सात्त्वतांपतिरित्युक्तो नवार्णस्साधुरक्षकः ।।

जीवो - ओं जीवाय नमः

विनयिता - ओं विनयित्रे नमः

तान् भागवतान् स्वस्य स्वपरिचारकत्मक्लेशासहतया आत्मनाशाद्व्यावर्त्य स्वपरिचर्यया जीवयति-संजीवयतीति जीवः ।

आनन्दमूर्तिर्भगवान् हरिस्त्रैलोक्यपूजितः ।
द्रष्टुं न सहते देवि क्लिष्टात् स्वपरिचारकान् ।।

तान् राजकुमारवल्लाल्यन् विनयते विशिष्य प्राप्नोति रक्षतीति विनयिता ।
णय गतौ रक्षणे च धातुः ।

निरुक्ति

तानात्मनाशाद्व्यावर्त्य सत्वान्यश्च स्वसेवया ।
उज्जीवयति जीवः स भक्तक्लेशासहो मनुः ।
भक्तान्नित्यं राजपुत्रलालनन्यायतस्सुखम् ।
रक्षत्यतो विनयिता नयते रक्षणार्थकः ।।

साक्षी- ओं साक्षिणे नमः

मुकुन्दो- ओं मुकुन्दाय नमः

तदर्थं तद्वृत्तसाक्षात्कारात् साक्षी ।

तैरैकान्त्यगरिम्णा प्रार्थितः स्वयं मुक्तिभूमिं ददाति इति मुकुन्दः।

निरुक्ति-

साक्षात्करोति यः साक्षी तद्वृत्तं रक्षणाय सः ।

तैः प्रार्थितस्स्वयं मुक्तिं मुकुन्दः स्याद्ददाति सः ।

मितविक्रमः - ओं अमितविक्रमाय नमः

तेषां ध्यानाराधनानुसन्धेयतत्त्वनिकराधारशक्तिधारणात्-

अमितविक्रमः ।

अमितः- अपरिमितः, विक्रमः- पराक्रमः-बलम् अस्येति अमितविक्रमः।

क्रमु पादविक्षेपे धातुः ।

श्रीपौष्करे, "कालवैश्वानरश्शायी नाना स्वापो निवासिनः ।

"आधारशक्तिसंज्ञस्य ह्यमूर्तस्य च वै विभोः ।

अभिमानतनुर्यो वै नानाभेदैश्च वर्तते ।।"

निरुक्ति-

तेषां ज्ञानानुसंधेयतत्त्वसन्दोहधारिणीम् ।

तां शक्तिं धृतवान् यो सौ स्मृतो ह्यमितविक्रमः ।।

अम्भोनिधिर - ओं अम्भोनिधये नमः

पातालाम्भसि अखिलजगदाधारपीठकमठात्मना निधीयतेइति अम्भोनिधिः ।

"अनन्तबलशक्तये भुवनभृते कच्छपात्मने" इति तन्मन्त्रवर्णनात् ।

निरुक्ति-

आधारशक्तिकमठस्वरूपेणार्णवाम्भसि ।
निधीयते स्वयं येन स ह्यम्भोनिधि रुच्यते ।।

अनन्तात्मा - ओं अनन्तात्मने नमः

तदुपरि जगदाधारस्तम्भभोगीन्द्रस्य आत्मतया तिष्ठतीति अनन्तात्मा श्रीज्यायाम्,

आधारशक्तेरुपरि विमलं दीप्तविग्रहम् ।
ज्वालाशतसमाकीर्णं शङ्खचक्रगदाधरम् ।।
अनन्तेशं न्यसेद् इति
"चक्रलाङ्गलहस्तं च प्रणमन्तं परावरम्" इति च ।

निरुक्ति-

कमठस्योपरि जगदाधारस्तम्भभोगिनः ।
स्वरूपेण स्थितो यो सा वनन्तात्मा प्रकीर्तितः ।।

महोदधिशयो , ओं महोदधिशयाय नमः

स एवान्तकाले तस्मिन्नेवानन्तभोगपर्यङ्के महोदधौ शेते इति महोदधिशयः। शीङ् स्वप्ने इति धातोः 'अधिकरणे शेतेः' इति अच् प्रत्ययः।

निरुक्ति-

तस्मिन्ननन्तपर्यङ्के समुद्रे शयनाच्च यः।
महोदधिशयः ख्यातो दशार्णो मनुरुत्तमः॥

न्तकः - ओं अन्तकाय नमः

तदा सर्वस्य अन्तं करोतीति अन्तकः। 'तत्करोति' इति णिच् ण्वुण्, चुरादौ गणसूत्रम्।

'अन्ते पृथिव्यां सलिले दृश्यसे त्वं महोरगे'[१]।

निरुक्ति-

अन्तं करोति जगतो योऽसावन्तक ईरितः।

---

१- रा०यु० १२०-२३

अजो -ओं अजाय नमः

वैष्णवे,

'आस्ते पातालमूलस्थः शेषो शेषसुरार्चितः।[1] इति

अस्मिन् तत्त्वावसाने प्रणवप्रकृतिभूताकारवाच्यतया स्मरणीयत्वात् अः, अकारवाच्यः जः जातः प्रादुर्भूत इति अजः ।

गन्धर्वाप्सरससिद्धाः सकिन्नरमहोरगाः ।
नान्तं गुणानां गच्छन्ति तेनानन्तो यमुच्यते[2] ।।

तस्य वीर्यं प्रभावश्च स्वरूपं रूपमेव च ।
नहि वर्णयितुं शक्यं ज्ञातुं वा त्रिदशैरपि[3] ।।

निरुक्ति-

तत्त्वावसानकाले च प्रणव प्रकृतित्वतः ।
स्मर्तव्यत्वादजः प्रोक्तः षडर्णो ह्यूर्मिनाशकः ।।

---

१- वि०पु० ५-२-५-२०

२- वि०पु० २।५।२४

३- वि०पु० २।५।२१

महार्हः - ओं महार्हाय

'तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः'[1]

तत्र प्रणवेन महम् -आत्मनिवेदनपूर्वकं पूजनम् अर्हतीति महार्हः।
'ब्रह्मणोत्वा महस ओमित्यात्मानं युंजीततद्वै महोपनिषदं
देवानां गुह्यमिति'[2]

निरुक्ति

स्वरूपादिकृतार्थेन तारेणात्मनिवेदनम् ।
महंपूजामर्हतीति महार्ह इति कथ्यते ।।

स्वाभाव्यो - ओं स्वाभाव्याय नमः

स्वमनेन मन्त्रेण स्वमूर्तेरात्मभिः स्वामित्वेन आभिमुख्येन अवश्यं भावनीयत्वात् स्वाभाव्यः ।

'ओरावश्यके' इति ण्यत् ।

'स्वो जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ।
आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर । इति

१- तै०उ०प्र०ना०उ० १०-२४

२- तै०उ०ना० ६।५१

नान्यो हेतुर्विद्यते ईशनाय'[1] इति

निरुक्ति-

मन्त्रेणानेनात्मभिक्षु स्वभूतेराभिमुख्यत:।
अवश्यं भावनीयत्वात् स्वाभाव्य: परिकीर्तित: ।।

जितामित्र: - ओं जितमित्राय नम:

नित्यस्य स्वस्वामिभावस्य स्वाभाविकत्वेन भाव्यत्वाद्वा । एतद्रहस्यावबोधविरोध्यहंममकारकामादयो जिता: तेषा मनेनेति जितामित्र: कामादयो हि एषाम् अमित्रा: ।

जिता: अमित्रा: शत्रव: तद्रूपा: तेषामेत द्रहस्यावबोधविरोधिभूता:, अहंकार ममकारकामक्रोधाख्य: अनेनेति जितामित्र: ।

'काम एष क्रोध एष रजोगुणसमुद्भव:'[2] ।

इति उपक्रम्य-

'जहि शत्रुं महाबाहो कामरूपं दुरासदम्'[3] इत्यन्तम् ।

निरुक्ति-

एतद्रहस्य विज्ञानविरोधिममतादय: ।
जितास्तेषामनेनेति जितामित्रो ष्टवर्णक: ।।

---

१- श्वे०उ०६-१७।१०

२- गीता ३।३७

३- गीता ३।४३

प्रमोदन: - ओं प्रमोदनाय नम:

अथ स्वसंबन्धिन: तत्प्रथमानुसन्धानेन प्रमोदयतिप्रहर्षयतीति प्रमोदन: ।

निरुक्ति-

ध्यानासक्तेषु भक्तेषु मोदमान: प्रमोदन:।

आनन्दो - ओं आनन्दाय नम:

अथ कपिलमूर्ति,आनन्दवल्लीमीमांस्यमानवाङ्मनसदुर्गहो महानानन्दो स्यास्तीतिआनन्द: ।

निरुक्ति-

वल्यामानन्दसंज्ञायामवाङ्मनसगोचर:।
आनन्दो यस्य यस्यास्तीत्यानन्द:परिकीर्तित: ।

नन्दनो, ओंनन्दनाय नम:

तमानन्दं यथोक्तायां मुक्तौ प्रापय्य नन्दयतीति नन्दन: ।

'एष ह्येवानन्दयाति'[१]

---

१- तै०उ० आ० ७

"एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ति इति वा

निरुक्ति-

तमानन्दमथोक्तायाम्मुक्तौ प्राप्य्य यस्सदा ।
मुक्तान्नित्यान्नन्दयते नन्दन: स तु कीर्तित: ।

नन्द: - ओं नन्दाय नम:

सत्यधर्मा - ओं सत्यधर्मिणे नम:

"अधिकरणे घञ्"

निरुक्ति-

भोग्यैर्भोगोपकरणैर्भोगैर्भोक्तृभिरेव च ।
तस्मिन् समृद्ध्यते नित्यमिति नन्द: प्रकीर्तित: ।

इत्थं मा च प्रक्रमात् - आ च स्वप्राप्तिलक्षणपरिसमाप्ते:, आर्जवात् सत्य: - अकुटिल: धर्म - वृत्तम् यस्येति सत्यधर्मा । धरतेर्मनि अस्तेश्शतरि निष्पन्नात् सच्छब्दात् यति च सत्यधर्मा ।

निरुक्ति-

आ प्रक्रमादा स्वप्राप्तेरार्जवात्सत्य वर्तन: ।
य: स्यात्स सत्यधर्मा च वस्वर्णस्सत्यधर्मद: ।।

त्रिविक्रम: - ओं त्रिविक्रमाय नम:

त्रीन् विक्रमते इति त्रिविक्रम: यद्वा त्रिषु लोकेषु विक्रमो यस्य इति त्रिविक्रम:, यथा-

"त्रिरित्येवं त्रयो वेदा: कीर्तिता मुनिसत्तमै:"
क्रमते तांस्तथा सर्वान् त्रिविक्रम इतिस्मृत: ।[1]

"सर्वे वेदा यत्रैकं भवन्ति"

"नारायणपरा: वेदा:" इति

निरुक्ति-

त्रीन् वेदान् क्रमते यो हि महिम्ना स त्रिविक्रम: ।

महर्षि: - ओं महर्षये नम:

ध्यानविधाने प्रोद्गीयमाणऋगादिवक्तृतया कपिलमूर्ति: महांश्चासौ ऋषि:, महर्षि: -यथोक्तवेदद्रष्टा चेति ।

"श्रुतीऋगाद्या वक्त्रेभ्य: प्रोद्गिरन्तमत: स्मरेत्" इति तद्ध्याने
"ऋषिं प्रसूतं कपिलं महान्तम्"
सारण्यस्य वक्ता कपिल: परमर्षिस्स उच्यते" इति च ।
साक्षाद्द्रष्टा मन्त्रवेदान्यो महर्षि: स च स्मृत: ।।

---

१- आर० ३

कपिलाचार्यः - ओं कपिलाचार्याय नमः

ध्यानविधौ निर्धमाङ्गारवर्णतया, कपिलः-पिङ्गलश्चासौ मन्त्रवणात् स्वतत्त्वसंविदाचयनात् आचार्यश्चेति कपिलाचार्यः ।

'कबृ, वर्णे' इति धातोः 'कवेः पश्च' इति इलच् प्रत्ययः, पकारश्चान्तादेशः कपिलः, इति । चर् गतिभक्षणयो इत्यस्माद् 'ऋहलोर्ण्यत्' इतिहलन्ताण्ण्यत् उपधावृद्धिः आङ्उपसर्ग पूर्वे वर्तते । आचार्यः समासे उक्तं रूपम् ।

निरुक्ति-

तत्त्वप्रवचनादेव कपिलाचार्य उच्यते ।

कृतज्ञो - ओं कृतज्ञाय नमः

सापराधसगरापत्ये प्यंशुमति स्वामिनमृत्वसुकृतमेव ज्ञातवान्इति कृतज्ञः वैष्णवे,

निरुक्ति-

स्वामिनमृत्वसुकृतं किंचिदंशुमता कृतम् ।
विदितं येन कारुण्यात् कृतज्ञः सोभिधीयते ॥

मेदिनीपतिः - ओं मेदिनीपतये नमः

कपिलरूपास्थानेन धराधारणात् ,मेदिन्याः नैरुक्त्या प्रसिद्ध्या मधुकैटभमेदस्संयोगात् तत्पदवाच्यायाः भुवः,पतिः निर्वोढेति मेदिनीपतिः ।

"कपिलमुपगम्य भक्तिनम्रः तदा तुष्टाव सर्वं भगवानाह"[1]

"यस्येयं वसुधा सर्वा वासुदेवस्य धीमतः ।
कापिलं रुपमास्थाय धारयत्यनिशं धराम्" ।। इति

निरुक्ति-

कापिलं रुपमास्थाय यो धारयति मेदिनीम् ।
स मेदिनीपतिः ख्यातो नवार्णो भूप्रदो मनुः ।।

त्रिपदः - ओं त्रिपदाय नमः

भोग्यभोक्तृनियन्तॄणि तत्त्वानि ज्ञाप्यतया पदानि यस्येति त्रिपदः ।यथा-

सत्त्वानामुपकाराय प्रधानं पुरुषं परम् ।
दर्शयिष्यामि लोकेषु कापिलं रूपमास्थितः।। इति
प्रणवे त्रीणि पदानि तद्वाचकानि इति वा ।
तथैवास्य त्रिककुदो वागाह रुपमास्थितः" ।

1- वि०पु० ४।४।२४

निरुक्ति-

भोक्तृभोग्यनियन्तॄणि ज्ञाप्यान्यस्य पदानि वा ।
प्रणवे त्रीणि वाच्यानि वाचकानि पदानि वा ।
वाराहरूपस्यास्थाने पदानि ककुदानि वा ।
यस्य सन्ति ह्यसौ नित्यं त्रिपदः परिकीर्तितः ।।

त्रिदशाध्यक्षो - ओं त्रिदशाध्यक्षाय नमः

स एव ब्रह्मादेः प्रलयापत्सखत्वात् त्रिदशाध्यक्षः ।
अग्रलग्नमहीमण्डलदंष्ट्रः

निरुक्ति-

"सखा स्यात् त्रिदशाध्यक्षो ब्रह्मादेः प्रलयापदि"

महाशृङ्गः - ओं महाशृङ्गाय नमः

अग्रलग्नमहीमण्डलदंष्ट्रतया महान् अद्वितीयः शृङ्गः अस्योपलक्षणतया दंष्ट्रा अस्येति महाशृङ्गः । "एकशृङ्गो वराहस्त्वम्"

दंष्ट्राग्रविन्यस्तमशेषमेतद्भूमण्डलं नाथ विभाव्यते ते ।
विगाहतः पद्मवनं विलग्नं सरोजिनीपत्रमिवोढ्यङ्कम् ।। इति

निरुक्ति-

मही यस्य च शृङ्गाग्रे महाशृङ्गः स उच्यते ।

कृतान्तकृत् - ओं कृतान्तकृते नमः

कृतान्तकृत् यथा- "हतो हिरण्याक्षमहासुरः" इति ।

वाराहस्मृतिपुराणयोः स्वसिद्धान्तकरणाद्वा

निरुक्ति-

अन्तकाभं हिरण्याक्षं कृतवान् यः कृतान्तकृत् ।

स्वसिद्धान्तकरत्वाद्वा स्वाख्यस्मृतिपुराणयोः ।

कृतान्तकृदिति ख्यातो वस्वणाभीष्टदायकः ।।

महावराहः - ओं महावराहाय नमः

महान् चासौ वराहः, इति महावराहः ।

निरुक्ति-

रसातलगताभुर्वी यश्चोद्धृत्योत्थितः क्षणात् ।

महावराह इति स्मृतो ह्युर्विप्रदो प्रभुः ।।

गोविन्दः - ओं गोविन्दाय नमः

सुषेणः - ओं सुषेणाय नमः

नष्टां च धरणीं पूर्वमविन्दं च गुहां गताम् ।

गोविन्द इति तेनाहम् ।

अथान्यद्रहस्यम्, शोभना शुद्धसत्वमयी बद्धमुक्तनित्यविजयो-पकरणत्वात् सैनेव पन्चोपनिषत् काय: अस्येति सुषेण: ।

निरुक्ति-

नष्टां च धरणीं पूर्वं गोविन्दो यस्स लब्धवान् ।
पन्चोपनिषदङ्गत्वात् सुषेण: परिकीर्तित: ।।

कनकाङ्गदी - ओं कनकाङ्गदिने नम:

तन्मयै: उक्तरुपसौन्दर्यसन्धुदाणै: अङ्गदोपलक्षितै: दिव्यभूषणैर्नित्ययोगात् कनकाङ्गदी ।

निरुक्ति-

अप्राकृतानि दिव्यानि भूषणादि च नित्यश:
रत्नानि सन्ति यस्यासौसोच्यते कनकाङ्गदी ।।

गुह्यो - ओं गुह्याय नम:

शंसिदुहिगुहिभ्यो वेति वक्तव्यम्' इति क्यप्

निरुक्ति-

पन्चोपनिषदङ्गैन गूढत्वात् गुह्य उच्यते ।

गभीरो - ओं गभीराय नमः

तदभिव्यक्तं स्वरमहागाम्भीर्यः गभीरः ।

"गभीरगम्भीरौ" इति गाहेरिरन् प्रत्ययः ह्रस्वत्वम्, मकारादेशश्च निपात्यते, तत्संपृक्तो हि, कतकसंकलितमिव सलिलम् ।

अनाथविद्याकलुषो पि संसारी प्रसीदति ? किं पुनः स्वभाव दीप्तो भगवान् ।

निरुक्ति-

महागाम्भीर्ययुक्तत्वात् गभीर इति कथ्यते ।

गहनो - ओं गहनाय नमः

गुप्तस - ओं गुप्ताय नमः

गहनः -दुरवगाहः, नहि स्वच्छसुगहान्तर्वृत्तो पि रत्नाकरो जानुदघ्नः ?

गुप्तः, च तद्गौरवज्ञैः पूर्वगुरुभिः, कुत्र किं वा लक्षणो गुप्तः,

"तमसः परमो धाता शङ्खचक्रगदाधरः" इति ।

निरुक्ति-

बालैर्दुरवगाहत्वाद् गहनः परिकीर्तितः ।

अन्यैर्दुरवबोधो यो गुप्त इत्यभिधीयते ।।

चक्रगदाधर: - ओं चक्रगदाधराय नम:

उक्तनित्यरुपविभूषणवत् पन्चशक्तिमयदिव्यायुध इत्यर्थ: । धरते: पचाधचि व्याख्यातोऽयं शब्द: ।

निरुक्ति-

"यश्शक्तिमद्दिव्यहेति: स स्याच्चक्रगदाधर: ।

वेधा: - ओं वेधसे नम:

एवं विविधममन्तमहाविभवं नित्यं विदधातीति वेधा तमस: परमो धाता।

निरुक्ति-

महाविभवकल्याणं सततं विदधाति य: ।

भक्तेभ्य: परमं वेधा: षडणो महङ्गलप्रद: ।।

स्वाङ्गो - ओं स्वाङ्गाय नम:

अजित: - ओं अजिताय नम:

यथा तत्रैव समग्रस्वासाधारणभङ्गं छत्रचामरादिसर्वाधिराज्य-परिबर्हजातं नित्यमस्येति स्वाङ्ग: 'प्राकृतै: ' उत्त्पक्मिरणादिभि: न जिता,यथोक्तद्रव्योपादाना पुरी अजिता अस्यास्तीति अजित: । अर्श आद्यजन्तं वा" "पुरं हिरण्मयीं ब्रह्मा विवेशापराजिता" इति ।

निरुक्ति-

स्वाश्चाधारणमङ्गं हि क्ष्वादिपरिबर्हणम् ।
यस्यास्ति नित्यं स स्वाङ्गः षड्गः परिवारदः ।
प्राकृतै र्न जिता या सा यस्यास्तीत्यजितापुरी ।
अजितस्तेन विज्ञेयः सप्ताणां मुक्तिदो मनुः ।

कृष्णः - ओं कृष्णाय नमः

"कृष्णेवर्णे" इति नक्प्रत्ययः,तन्मयरुप एव वाराहाद्यवतारो पि इति च निरुचे,

"कृषामि मेदिनीं पार्थ भूत्वा कृष्णायसो महान् ।
कृष्णो वर्णश्च मे यस्मात्तेन कृष्णो ह्यर्जुन ।। इति
यथोक्तं सर्वं व्यनक्ति श्रीविष्णुतत्त्वादौ ।

निरुक्ति-

अप्राकृतातिरुचिरमेचकः कृष्ण ईरितः ।

दृढः - ओं दृढाय नमः

संकर्षणो - ओं संकर्षणाय नमः

दृह दृहि वृद्धौ "दृढः स्थूलबल्योः" इति निपातितः ।
क एवम् संकर्षणः ।क एवम् - संसारे चिदचितो वात्मनि संकृषति,सम्यं कृषतीति वा निरुक्तानुसारात् तयोस्संकर्षं सम्यं कर्षं स्वात्मनि कर्षणं नयतीति वा संकर्षणः ।

निरुक्ति-

स्थूलत्वाद्बलवत्त्वाच्च दृढ इत्यभिधीयते ।
यः कर्षति चिदचितौ स संकर्षण उच्यते ।।

अच्युतः -ओं अच्युताय नमः

"च्यवनोत्पत्ति युक्तेषु ब्रह्मेन्द्रवरुणादिषु
यस्मान्न च्यवसे स्थानात् तस्मात् संकीर्त्यसे च्युतः" इति ।

अच्युतः ।

निरुक्ति-

"यस्मान्न च्यवते स्थानाद् ब्रह्मादिस्सो च्युतः ।

वरुणो - ओं वरुणाय नमः

वारुणो - ओं वारुणाय नमः

"वृञ् वरणे कृवृदारिभ्य उनन्, गुणः, रपरः, णत्वम् वरुणः इति । तं स्वामित्वेन वृणुते इति वरुणः, तत्र भवः, वारुणः तेषु चाप्यहम्" इति ।

निरुक्तिः-

यास्स्स्थ सर्वमावृत्य वरुणः स तु कथ्यते ।
आपस्था वरुणास्तासु स्थितो वारुण ईरितः ।

वृद्धः - ओं वृद्धाय नमः

वृद्धा वरणे धाव्य् ।

"निवासवृक्षाःसाधूना मापन्नानां परा गतिः" ।
"वृक्षा इव स्तब्धो दिवि तिष्ठत्येकः ।"

पुष्कराक्षः - ओं पुष्कराक्षाय नमः

तेषांप्रसादवर्षेण पोषके अक्षिणी यस्य सः पुष्कराक्षः ।

पुष्करम् - "पुषः करन्" इति करन् प्रत्ययः किद्वद्भावः ।

निरुक्तिः-

सतां प्रसादवर्षेण पोषके यस्य चाक्षिणी ।
पुष्कराक्षः स विज्ञेयो ह्यष्टार्णः प्रीतिवर्धकः ।

महामनाः - ओं महामनसे नमः

भगवान् - ओं भगवते नमः

"तेष्वगाधोदारविस्तृतमनाः,महामनाः ।
एवमशेषदोषविद्वेषिकल्याणस्वरूपतया परमपूज्यः भगवान् ।

निरुक्ति-

अगाधोदरविस्तारं मनो यस्य महामनाः ।
सर्वहेयप्रत्यनीककल्याणगुणवत्तया ।
पूज्यात्पूज्यतमो यो सौ भगवान् इति शब्द्यते ।

भगहा - ओँ भगहने नम:

ऐश्वरस्य समग्रस्य वीर्यस्य यशस: श्रिय: ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ।।[1]

तं हन्ति गच्छतीति हन्तिर्गमनकर्मा अत्र वैष्णवे षष्ठेंशे

भगवच्छब्द निर्वचनप्रकरणं लेख्यम् ।

निरुक्ति-

भगैस्तु कल्याणगुणै: सर्वं सर्वत्र गच्छति ।
यश्चासौ भगहा प्रोक्त: षड्गुणै: सुखदायक: ।

नन्दी - ओँ नन्दिने नम:

वनमाली- ओँ वनमालिने नम:

एवम् असौ व्यूहे संकर्षण: स्वावतारे नन्दगोपेन पितृमान्

नन्दी मधुवल्लवीसेवा नन्दवान् वा ।

स्वसृज्यभूतसूक्ष्मसारसौरभ्याभिमानिन्या वैजयन्त्या नित्ययोगी

वनमाली ।

निरुक्ति-

नन्दगोपेन पितृमान् नन्दीति परिगीयते ।
स्वसृज्यभूतसूक्ष्माणां माल्या नित्ययोगत: ।
वनमाली समाख्यातो दुर्गिष्टानां भूषणप्रद: ।।

---

१- वि०पु० ६।५।७४

हलायुध: - ओं हलायुधाय नम:

उक्तभूतसमृद्धिकृषीबलहलपरिकर: हलायुध: । यथा-

"बलभद्रं समृद्ध्यर्थं सीरकर्मणि कीर्तयेत्" इति ।

निरुक्ति-

हलं च सततं सीरं वर्चे यो सो हलायुध: ।
सीरकार्यसमृद्ध्यर्थोविस्वणो मन्त्रनायक: ।।

आदित्य: - ओं आदित्याय नम:

स्ववाचकात् आवणात् आत:, इत्य: प्राप्य:, इति आदित्य: ।
"इतिस्तुशास्वृदृजुष: क्यप्" आकारो हि संकर्षणबीजमन्त्र:

यथा- वैष्णवे धर्मे देवकीं प्रति भगवान् -

"दाक्षायणी त्वमादिति: संभूता वसुधातले ।
तत्त्यैव त्वं ज्ञाद्धात्री प्रसादं ते करोम्यहम् ।।

निरुक्ति-

आवणादेव प्राप्यो य: स आदित्य: प्रकीर्तित: ।
अदितिर्देवकी तस्या: आदित्यो वा ह्यपत्यत ।।

ज्योतिरादित्य: - ओं ज्योतिरादित्याय नम:

सहिष्णुर् - ओं सहिष्णवे नम:

प्रसिद्धो ह्यादित्य: तत्तेजसि तमायेत, श्रीनारायणीये,

"तयोर्भवेन युध्यतोः "निष्प्रभाणि च तेजांसि ब्रह्मा चैवासनाच्च्युतः" इति ।

तत्र तदपराधसहनात् सहिष्णुः तत्रैव प्रसादयामास भवो देवं नारायणं प्रभुम् । शरणं जगतामाद्यं वरेण्यं वरदं हरिम् ।

तथैव वरदो देवो जितक्रोधो जितेन्द्रियः ।
प्रीतिमानभवत्तत्र रुद्रेण सह संगतः ।। इति ।

निरुक्ति-

समस्ततेजोहरणाज्ज्योतिषा दीप्यतेच यः ।
स वै स्याज्ज्योतिरादित्यो नवाणां ज्ञानदायकः ।।
ब्रह्मादिमन्तुसहनात् सहिष्णुरिति कथ्यते ।

गतिसत्तमः - ओं गतिसत्तमाय नमः

सुधन्वा - ओं सुधन्वने नमः

स एव परमधर्माध्वदेशिकत्वेन गतिसत्तमः ।
"गतौ प्रत्ययितव्य इति,
"अहो ह्यनुगृहीतो ह्ययधर्म एभिस्सुरैरिह"
सुधानिमित्तसुरा सुरसमरसंहारिशरासनत्वात् सुधन्वा
तत्र दिव्यं धनुर्दृष्ट्वा नरस्य भगवानपि ।
नरस्ततो वरकटकाग्र्यमुणणैर्महेषुभिः पवनपदं समावृणोत्"

निरुक्ति-

धर्मे प्रत्ययिततमो गतिसत्तम उच्यते ।
सुशोभनं धनुर्यस्य सुधन्वा परिकीर्तितः ।।

खण्डपरशुर् - ओं खण्डपरशवे नमः

परशुना रौद्रसंग्रामखण्डनात् खण्डपरशुः, तत्रैव

"अथ रुद्रविघातार्थं भिणीकां नर उद्धरन्
मन्त्रैश्च संयुयोजाशु सोमवत् परशुर्महान् ।
दीप्तश्च सहसा रुद्रे खण्डनं प्राप्तवांस्तदा ।
ततो हं खण्डपरशुस्ततः पाशुखण्डनात् ।।"

निरुक्ति-

तीव्रकोपात् परशुना रौद्रसंग्रामखण्डनात् ।
इत्युक्तः खण्डपरशुर्निर्वाणशोकनाशकः ।।

दारुणो - ओं दारुणाय नमः

एवं बाह्याभ्यन्तराविदारणात् दारुणः ।
"कृदारिभ्य उनन्" ।

निरुक्ति-

बाह्याभ्यन्तरशत्रूणां दारणादपि दारुणः" ।

द्रविणप्रद: - ओं द्रविणप्रदाय नमः

अथ व्यासावतारः ।
समग्रं शास्त्रतदर्थरूपद्रविणं प्रददातीति द्रविणप्रदः ।

यथा- "वहन्वै वामहस्तेन सर्वशास्त्रार्थसंचयम् ।
दक्षिणेन च शास्त्राथानादिशंश्च यथास्थितान् ।

निरुक्ति-

शास्त्रं तदर्थं द्रविणं प्रददाति जनाय यः ।
व्यासो भूत्वा हरिरसादाद् द्रविणप्रद उच्यते ।।

दिविस्पृक् - ओं दिविस्पृशे नमः

परविद्या दिवि च परमपदे स्थितं स्वतत्त्वरहः स्पृशतीति दिविस्पृक्, "स्पृशो नुदके क्विन्" हलदन्तात्०" इत्यलुक् "विदितपरमार्थः" इति तन्मन्त्रे ।

निरुक्ति-

"परया विद्यया यः स्वं स्पृशतीति परे पदे" ।
दिविस्पृक् सोऽच्यते नित्यम् ।

सर्वदृग् - सर्वदृशे नमः

व्यासो - ओं व्यासाय नमः

अन्यदपि सर्वं वैभवं पश्यतीति सर्वदृक् ।
"दृशेश्चेति वक्तव्यम्" इति क्विन् प्रत्ययः । "क्विन्प्रत्ययस्य कुः" इति कुत्वम् । "विदुषे" इति तन्मन्त्रे ।

"युगानुसारबोधानामरवेदजननाय वै ।
विभजंस्तु चतुर्धा वै वेदमेकं त्रिकालवित्" इति व्यासः ।

निरुक्ति-

सर्वदृक् सर्वदर्शनात् ।
त्रय्याश्चतुर्धा करणाद् व्यास इत्युच्यते बुधैः ।।

वाचस्पतिर् - ओं वाचस्पतये नमः

अयोनिजः - ओं अयोनिजाय नमः

पञ्चमवेदरूपायाः वाचः स्वामी वाचस्पतिः ।

सारस्वतावतारे भगवद्वाक्संभवत्वात् अयोनिजः ।

निरुक्ति-

वाचः पञ्चमवेदस्य स्वामी वाचस्पतिः स्मृतः ।

सारस्वतावतारे हि भगवन्मुखसंभवात् ।

स्मृतो ह्ययोनिज इति वर्ण्णः कर्मनाशकः ।

त्रिसामा - ओं त्रिसाम्ने नमः

अथ भूयो जातस्पृहा भोशब्देनानुदनादयन्

सरस्वतीमुच्चचार तत्र सारस्वतो भवेत् ।। इति ।

निरुक्ति-

प्रोक्त स्त्रिसामा यश्चासौ बृहदादित्रिसामकः

सामगस् - ओं सामगाय नमः

साम- ओं साम्ने नमः

"गणपोष्टकं" इति टक्, तदनुभवाह्लादो पि हि ।

साम योऽयं "एतत्साम गायन्नास्ते" इति

स्वगायकानामपि पापं स्यतीति साम ।

षाऽन्तकर्माणि" इति "सातिभ्याम् ० इत्यादिना मनिन्

निरुक्ति-

स्वयं स्वानुभवप्रीत्या गायतीति च सामगः"

स्वगाय कानां कालुष्यनाशकस्साम ईरितः ।।

निर्वाणम् - ओं निर्वाणाय नमः

भेषजम् - ओं भेषजाय नमः

निर्वाणमिति" निर्वाणोवाते" इति निपातितः ।

अतः असाध्यसंसारव्याधेः परमम् भेषजम्, स्तवराजे ।

"नारायणादृषिगणास्तथा सिद्धा महोरगाः ।

देवा देवर्षयश्चैव यं विदुर्दुःखभेषजम्" इति ।

निरुक्ति-

निर्वाणं स्यात्परगतेर्निमितं भिर्गतैनसाम् ।।

असाध्यभवरोगस्य भेषजं यत्तदौषधम् ।।

भिषक् - ओं भिषजे नमः

संन्यासकृत् - ओं संन्यासकृते नमः

सम्यक् विदितनिदानचिकित्सः - भिषक् ।

कथं चिकित्सति, सात्त्विकेन संन्यासेन रजस्तमसी कृन्ततीति

संन्यासकृत ।

निरुक्ति-

मवरोगनिदानज्ञो यो सो भिषगुदीरितः ।
यः कृन्तति स संन्यासकृत् नवार्णो मनुस्मृतः ।।

शमः - ओं शमाय नमः

भोक्तारं यज्ञतपसाम्" इत्यादिना
इच्छाभयक्रोधशान्त्युपायमाचष्ट इति शमः ।
'तदाचष्टे' इति णिच् चुरादिगणसूत्रम् पचाचचि कृते रुपम् ।

निरुक्ति-

अनुद्धचः शमः प्रोक्तः ।

शान्तः - ओं शान्ताय नमः

स्वयं च शान्तः ।सत्यपि समुद्रेकहेतौ महिसमुद्रे निस्तरङ्ग-
समुद्रवदनुद्रिक्तः,तदर्शिनां हि प्रभावः यं जगो परान्जलिः,[1]
"तत्सन्निधौ वैरत्यागः"
अवार्चीनश्च परितः पट्मदेनसां दहनं धाम विलोकनक्षमम् ।
मधुरैरवशानि लम्भयन्नपि तिर्यन्चि शमं निरोदितैः[2]

१- पात०सू० ४-३५
२- किरा० २-५५

निरुक्ति-

"शान्तो विकृतमानस:" ।

निष्ठा -ओं निष्ठायै नम:

शान्ति: - ओं शान्तये नम:

"आतश्चोपसर्गे" इत्यङ्० । "निष्ठा" इति ।

परमसमाधौ विस्मृतसर्वाधिकारा: शाम्यन्तीति शान्ति: ।

निरुक्ति-

तिष्ठीयते ह्यर्थिना यो हृदि निष्ठा स कथ्यते ।

सर्वाधिकारा: शाम्यन्ति समाधौ परमे यत: ।

अत: शान्ति:,इति प्रोक्त: कृत्वर्णो मक्तिदो मनु: ।

परायण: - ओं परायणाय नम:

समाहितानां परममयनम् अव्यवहितप्रापिका परमा मक्तिरस्मात्

इति परायण:" यथा-

"निर्मम: शान्त:"[1] इत्युपक्रम्य

"मद्भक्तिं लभते पराम्"[2] इत्यन्तम्

"भक्त्या त्वनन्यया शक्य:" इति च ।

---

१- गीता १८।५३

२- गीता १८।५४

निरुक्ति-

यस्मात् तु परमा भक्तिः चरमप्रापिका मता ।

तस्मात् परायणः, इति स्मृतो ह्यष्टार्ण उत्तमः ।

शुभाङ्गः -ओं शुभाङ्गाय नमः

शान्तिदः - ओं शान्तिदाय नमः

स हि स्वयोगक्षेमवहः शुभाङ्गः ।

एवं निष्पन्नभक्तिभ्यः, अप्रतिप्रसवनिर्मूलितनवोपप्लवां स्वसायुज्य

शान्तिं ददाति इति शान्तिदः, यथा-

"विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति" इति

"मत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्"

"तमीशानं वरदं देवमीड्यं निचाय्यात्मानं शान्तिमत्यन्तमेति"

इत्यादि ।

निरुक्ति-

स्वशक्त्युद्भवकल्याणयमाद्यष्टाङ्गसंभवः ।

यस्मात् शुभाङ्गः संप्रोक्तः सप्ताणो ध्यानदायकः ।।

एवं निष्पन्नभक्तिभ्यः शान्तिं सायुज्य संज्ञिकाम् ।

महानन्दां ददातीति शान्तिदः परिकीर्तितः ।।

स्रष्टा - ओं स्रष्ट्रे नमः

एवं मुमुक्षून् मुन्वन् सिसृक्षूंश्च प्रचितनिरन्तन कर्मवैचित्र्यौचित-परिकरैर्योजयन् सृजतीति स्रष्टा ।

"सृजिदृशोर्झल्यमकिति" इत्यम् ।

निरुक्ति-

कर्मवैचित्र्यतस्सृष्टीन् स्रष्टा स्यात्सृजतीति यः ।

कुमुदः - ओं कुमुदाय नमः

एवं सृष्टस्य सांक्षस्तम्बस्य उच्चावचशब्दस्पर्शादि भोगवती भूमिः कुः, प्राकृतमण्डलं तत्र भोक्तृन् भोजयन् मोदत इति कुमुदः, मूलविभुजादित्वात् कः ।

"अनीशश्चात्मा बध्यते भोक्तृभावात्"[1]

"ज्ञाज्ञौ द्वावजावीशनीशौ"[2] इति

निरुक्ति-

कौ प्राकृते मण्डलेयस्स्वभोक्तृनपि भोजयन् ।

मोदते यस्सदा कालं कुमुदः स तु गीयते ।।

---

१- श्वे०उ० १।८

२- श्वे०उ० १।६

कुवलेशय: - ओं कुवलेशाय नम:

कुवलेशय:- तत्र कौ कुत्सितं वा वलन्ते आसंसारं भ्राम्यन्ति इति कुवला:,जीवा:ते स्वदेहेन्द्रियादौ आपेदिकाभिमानिकाईशाश्चेति कुवलेशा: तांस्तथा नियच्छन्यातीति कुवलेशय:, 'आतो नुपसर्गे क:'

निरुक्ति-

कुत्सितं वल्मेणां ते कुवला जीवसंज्ञिता:।
देहेन्द्रियादेरीशास्ते कुवलेशा इति स्मृता: ।
यस्तान्नियच्छन्यातीति कुवलेशय उच्यते ।।

गोहितो - ओं गोहिताय नम:

गोपतिर् - ओं गोपतये नम:

गो: प्रकृते: संसारवीजावापे दोत्रीभूताया: हित:- व्यवस्थापक: गोहित: ।

'यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं सन्च विचैति सर्वम् । तमीशानम्[1] ।

'गौरनाधन्तवती सा जनित्री भूतभाविनी'[2]
'सूयते पुरुषार्थन्च तेनैवाधिष्ठिता जगत्'[3]

---

१- श्वे०उ० ४।११
२- मन्त्रोप० ३३०।१८
३- मन्त्रोप० ३३०।१७

मोगभूमे: स्वर्गस्यापि पति: गोपति: ।

निरुक्ति-

संसारबीजक्षेत्रस्य प्रकृते: स्थापकश्च य: ।

स गोहित:स्वर्गभूमे: पतित्वात् गोपति:स्मृत: ।

गोप्ता - ओं गोत्रे नम:

अस्य कर्मफलचक्ररक्षिता गोप्ता ।

निरुक्ति-

य: कर्मफलचक्रस्य गोप्ता हि परिपालनात् ।

वृषभादो - ओं वृषभादाय नमः

वृषप्रियः - ओं वृषप्रियाय नमः

तच्च धर्म द्वारेणेति वृषभादः,
फलवर्षि वृषभो धर्मः, आदः संसारचक्राधारो यस्मात् ।
एवं प्रवर्तकधर्मो प्रियावस्येति वृषप्रियः ।
तत्प्रियत्वेन हि वैधानां कर्मणां धर्मत्वम् तत्प्रियत्वस्थापनमेव
च विध्यर्थः, इदन्च फलमत उपपत्ते:[1] इत्यत्र न्यरु नि०

निरुक्ति-

यस्यादावृषभो धर्मो वृषभादस्स उच्यते ।
धर्मो प्रियो तावस्येति प्रवर्तकनिवर्तको ।
वृषप्रिय स्स विज्ञेयो ह्यष्टाणः फलदो मनुः ।।

अनिवर्ती - ओं अनिवर्तिने नमः

तत्र प्रवृत्तिकर्मरतानां धूमादिपितृयाणपुनरावृत्त्या संसारान्न
निवर्तयतीति अनिवर्ती ।
गृहादित्वाणिनिः, एवं कामीत्यादयः, अतो हि संसारा-
नुच्छेदः यथा-
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते[2] ।।

१- ब्र०सू० ३।२।३७

२- गी० ८।२५

"कृतात्ययेऽनुशयवान्"[1]

इत्यादौ चैतद्व्याचारि ।

निरुक्ति-

पितृयाणप्रवृत्तानां संसारान्न निवर्तनात् ।
अनिवर्ती समाख्यातो ह्यष्टार्णो भयदो मनुः ।।

निवृत्तात्मा - ओं निवृत्तात्मने नमः.

ततो निवृत्तनिवृत्तधर्माणो ह्यात्मानो यस्येति निवृत्तात्मा

निरुक्तिः-

निवृत्तिधर्माणो यस्य ह्यात्मानस्सन्ति स स्मृतः
निवृत्तात्मा इत्यष्टवर्णो दुष्कर्मफलमोचकः ।

संदीप्ता - ओं संदीप्ते नमः

तत्र प्रवृत्तान् संकुचितस्वाभाविकज्ञानप्रभावान् कर्तुं शीलमस्येति संदीप्ता यथा- 'यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा ।।[2]

निरुक्ति-

स्वाभाविकासंकुचितमेधायाश्च प्रकाशनम् ।
निवृत्तिधर्मणां कर्तुं शीलं यस्यास्ति सर्वदा ।
स संदीप्तेति कथितः षडणो धीविकासदः ।।

---

१-ब्र०सू० ३।१।८

२- वि०पु० ६।७।६२

क्षेमकृत् - ओं क्षेमकृते नमः

शिवः - ओं शिवाय नमः

निवृत्तानां तत्संकोचनविमोचनं क्षेमं करोतीति क्षेमकृत् एवं सर्वेषुमुक्षामुमुक्षु शिवंकरत्वात् शिवः ।

यथा- "संसारमोक्षास्थितिबन्धहेतुः"

"पितृलोके राज्यमनुशास्ति देवः"

"शिवः शिवानामशिवो शिवानाम्"[1] इति

निरुक्ति-

असंकोचज्ञानरुपक्षेमस्य करणात्सताम् ।

क्षेमकृत् चापि सर्वेषां -

शिवस्य करणात् शिवः ।

श्रीवत्सवक्षाः -ओं श्रीवत्सवक्षसे नमः

अथ शिवत्वोपपादकानि, ईशितव्यात्रिभाजक लक्ष्मीवांल्लभ्य-सौभाग्यचिह्नं श्रीवत्साख्यं वक्षसीति श्रीवत्सवक्षाः ।

श्रीवत्सवक्षाः[2] इति

निरुक्ति-

लक्ष्मीवांल्लभ्यसौभाग्यचिह्नं श्रीवत्सनामकम् ।

श्रीवत्सवक्षा यस्यास्ति वक्षसीति स तु स्मृतः ।।

---

१- मा०उ० ४३।६

२- रा०पु० ११४-९५

श्रीवासः - ओं श्रीवासाय नमः

श्रीपतिः - श्रीपतये नमः

'नित्यश्रीः'[1] इति

तेन यत्सूच्यते तदुच्यते -श्रीवासः ।

'श्रियो नित्यस्वैरविहारकल्पद्रुमोद्यानम्'

'तुल्यशीलवयोवृ ताम्'[2] इतिवत्

तस्याः समुचितो नित्यस्वयंवरपतिः श्रीपतिः

यथा- 'श्रीश्च ते लक्ष्मीश्च पत्न्यौ'[3]

'अस्येशाना जातो विष्णुपत्नी'[4]

निरुक्ति-

श्रियो विहारस्थानत्वात् श्रीवास इति चोच्यते ।
स्वयं श्रियः पतित्वेन वृतत्वात् श्रीपतिः स्मृतः ।।

---

१- रा०यु० ११४-१५

२- रा०सु० १६।५

३- पु०सू०

४- श्रीसू०

श्रीमतां वरः - ओं श्रीमतांवराय नमः

तस्याः सादरपूर्णनिर्वर्णनिनित्यपात्रं भगवान्, ब्रह्मादयस्तु तन्नान्तरीयककटाक्षशीकरक्षणलक्ष्यम् यथा-

शुक्लमाल्याम्बरधरा स्नाता भूषणभूषिता ।
पश्यतां सर्वदेवानां ययौ वक्षस्थलं हरेः ।।

तयावलोकिता देवा हरिवक्षस्थलस्थया।
लक्ष्म्या मैत्रेय सहसा परां निर्वृत्तिमागताः[1] ।।

तस्मात् श्रीमतांवरः ।

निरुक्ति-

देवानां श्रीमतां श्रेष्ठः श्रीमतांवर उच्यते ।

श्रीदः - ओं श्रीदाय नमः

श्रीशः - ओं श्रीशाय नमः

नित्यनूतननिर्व्याजप्रणयनरसश्रियं तस्यै ददातीति श्रीदः । तस्या जीवातुरित्यर्थः तच्छ्रयणेन हि सा श्रीर्निरुच्यते ,

---

१- वि०पु० १।९।१०६

न च सीता त्वया हीना न चाहमपि राघव ।
मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ[1] ।।

इति हि तस्याः प्रकृतिः

"विष्णोरेषानपायिनी"[2]
"अनन्या हि मया सीता भास्करेण प्रभा यथा"[3]
"अनन्या राघवेणाहम्"[4] इति च ।
"श्रियश्श्रीश्च भवेदग्र्या" इति

तस्या अपि तथा स्वनिदानत्वात् श्रीशः, यद्वा श्रीरेवास्यापि ईशा सर्वावस्थाव्यवस्थापिकेति - श्रीशः ।

निरुक्ति-

यो सौ श्रियै स्वप्रणयरसदः श्रीद ईरितः ।
श्रीशः स्याच्छ्रिय ईशित्वादीशा श्रीरस्य वा मतः ।।

---

१- रा०अयो० ५३।३१
२- वि०पु० १।९।१४४
३-रा०यु० १२१।१९
४- रा०सु० २१।१५

श्रीनिवास: - ओं श्रीनिवासाय नम:

श्रीनिधि: - ओं श्रीनिधये नम:

दिव्यवल्ल्या इव कल्पद्रुम: तस्या नित्योपपन्न:श्रीनिवास: वसतिर्निपूर्व: पूर्ववदधिकरणे घञ् वृद्धि: ।

रत्नमञ्जरीव मञ्जूषायांश्रीर्निधीयते स्मिन्निति श्रीनिधि: ।

निरुक्ति:-

नित्योपपन्ननिवासत्वात् श्रीनिवास: श्रीय: स्मृत: ।
श्रीरस्मिन्निहिता नित्यं श्रीनिधि: परिकीर्तित: ।।

श्रीविभावन:- श्री विभावनाय नम:

श्रीधर:- ओं श्रीधराय नम:

सैवास्य विभावनी प्रख्योपख्याहेतुरिति[1] श्रीविभावन: ।
'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा' इतिवत् ।

---

१- रा०बा० ३७।१८

तां रत्नमिवार्चिषं पुष्पमिव सुरभिम् इन्दुरिव चन्द्रिकाम् अमृतमिव स्वादुताम् औत्पत्तिकेन संबन्धेन धरतीति श्रीधरः ।

"नहि हातुमियं शक्या कीर्तिरात्मवतो तथा" इति

निरुक्ति-

यस्य प्रथ्योपास्यहेतुः श्रीःस्यात्स श्रीविभावनः ।
रुच्यर्थिः कौमुदीगन्धान् सुधारत्नेन्दुपुष्पवत् ।
श्रियं धरति नित्यं यः श्रीधरः सतु कीर्तितः ।।

श्रीकरः - ओं श्रीकराय नमः

श्रेयश्रीमान् - ओं श्रेयश्रीमते नमः

तां परत्व इव व्यूहावतारादिष्वपि स्वानुरुपां करोतीति श्रीकरः ।

"कृत्वो हेतुताच्छील्यानुलोम्येषु" इति आनुलोम्ये टः, यथा- देवत्वे देवदेहेयम्"[1] इत्यादि श्रेयसे सर्वपुरुषार्थाय श्रयणीया श्रीः श्रेयः श्रीः सा अस्य नित्ययोगिनीति श्रेयश्रीमान् ।

---

१- वि०पु० १।९।१४२

यथा-

प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ।
अलमेषा परित्रातुं राक्षस्या महतो भयात्[1]

शरीरारोग्यमैश्वर्यमरिपक्षक्षयं सुखम्[2]

'विमुक्तिफलदायिनी'[3] ।

'यस्यां हिरण्यं विन्देयंगामश्वं पुरुषानहम्[4] ।

'श्रियं लोके देवजुष्टामुदाराम्'[5] इति हि श्रियो निर्देशः ।

निरुक्तिः

परव्यूहावतारेषु स्वानुरूपां करोति माम् ।
श्रियं यो सौ श्रीकरः स्यात् मुन्यर्णः श्रीकरोमनुः ।।
श्रेयसे श्रयणीया श्रीः श्रेयश्रीर्नित्ययोगिनी ।
श्रेयः श्रीमान् सावस्य वस्वर्णः पुरुषार्थदः ।।

---

१- रा०यु० ५८।९२
२- वि०पु० १।९।१२४
३- वि०पु० १।९।१२०
४- श्री०सू०
५- श्री०सू०

लोकत्रयाश्रयः - ओं लोकत्रयाश्रयाय नमः

सह तया जगन्मात्रा पितृवत् सर्वाश्रयः, लोकत्रयाश्रयः ।

यथा-

"त्वम्माता सर्वलोकानां देवदेवो हरिः पिता"[1] इति

निरुक्ति-

श्रिया सह जगन्मात्रा पितृवत् सकलाश्रयः ।

लोकत्रयाश्रयः स स्यात् दशार्णो रत्नाकत्वदः ।।

स्वक्षस् - ओं स्वक्षाय नमः

स्वङ्गश्- ओं स्वङ्गाय नमः

तत्सौन्दर्यसुधोदधिपारीणदिव्यकरणः स्वक्षः ।

तस्या अपि स्पृहणीयदिव्यदेहः स्वङ्गः ।

निरुक्ति-

श्रीसौन्दर्य सुधासिन्धु पारीण करणो हि यः स्वक्षः ।

श्रियः स्पृहणीयदिव्याङ्गः स्वङ्ग उच्यते ।

---

१- वि०पु० १।८।१२५

शतानन्दः - ओं शतानन्दाय नमः

नन्दिर् - ओं नन्दये नमः

परस्परप्रणयप्रवहदपरिमितानन्दः शतानन्दः ।

एवम् - सर्वदा सर्वत्र सर्वथा च जनया समृध्यति इति नन्दिः, इन् "सर्वधातुभ्यः" इति सूत्रेण ।

निरुक्ति-

अन्योन्यप्रणयानन्दसिन्धौ समुदितो हि यः ।

शतानन्दः स विज्ञेयो दम्पत्यानन्ददो मनुः ॥

नन्दिस्सर्वत्र नित्यं स श्रिया ऋध्यति सर्वदा ॥

ज्योतिर्गणेश्वरः - ओं ज्योतिर्गणेश्वराय नमः

विजितात्मा - ओं विजितात्मने नमः

उभयानुकूलोज्ज्वलशेषशेषणासनादिनित्यपरिचारकगण-परिचरणीयत्वात् ज्योतिर्गणेश्वरः ।

ज्योतिश्शब्दो हि,

"मरीचीनां पदमिच्छन्ति वेधसः"[1]

"साध्यास्सन्ति देवाः"[2] इति

---

१- पु०सू०

२- पु०सू०

सदा धोतमानसूरिपरिकरवाचक:,एवं परत्वं च काष्ठा ।

अथ सौशील्यपरमावधि: गुह्यतम: लक्ष्मीकमनीयत्वसम्प-दुच्छूड्०खलमपि मनोऽस्य प्रणम्नै: प्रणवीकृतमिति विजितात्मा।

निरुक्ति-

नित्यसूरिगणानां य ईशो ज्योतिर्गणेश्वर: ।
सौशील्यस्य गुणस्याथ: परमावधि वर्णनम् ।
मानसं प्रणतैर्यस्य विजितात्मा जितं च स: ।

विधेयात्मा - ओं विधेयात्मने नम:

तेषां विधेयं हि इहागच्छ इह तिष्ठ इहास्व इदं मुड्०क्ष्व इति विधातुं च योग्यं स्वरुपमस्येति विधेयात्मा ।

निरुक्ति-

इहागच्छेह तिष्ठेदं मुड्०क्ष्वेति प्रणतैस्सदा ।
योग्यं विधातुं यद्रूपं विधेयात्मा स कीर्तित: ।।

सत्कीर्तिश् - ओं सत्कीर्तये नम:

ईदृशसौशील्यसत्त्वेनास्य अतिमहती कीर्तिरिति सत्कीर्ति: ।

एतावद्धि सुवचनम्,

"यदस्य कीर्त्यते तदस्ति तावदिति। न तु यावदस्ति तावदिति तदधिकं वा" इति ।

"यथा सर्वेश्वरः कृष्णः प्रोच्यते सर्वपण्डितैः ।
तथापि स्वल्पमेवोक्तं भूतार्थे कतमा स्तुतिः ।।

"स्थाने हृषीकेश: तव प्रकीर्त्या"[1] इत्यादि च ।

निरुक्ति-

"ईदृक्सौशील्यसत्त्वाद्धि सत्कीर्तिरिति कथ्यते ।

छिन्नसंशयः - ओं छिन्नसंशयाय नमः

एवं सौशील्यप्रथया स्वविषयया सुज्ञानदुर्ज्ञानसुसाधदुस्साधसुलभ दुर्लभत्वादिसंशयश्छिन्नो येनेति छिन्नसंशयः ।

यथा- "तं हि देवमात्मबुद्धिप्रसादम्"[2]

"त्वदन्यस्संशयस्यास्य छेत्ता न ह्युपपद्यते"[3] इत्यादि ।

निरुक्ति-

सौशील्यप्रथया चैवं दुष्करत्वादिसंशयः ।
छिन्नो येन विशेषेण स प्रोक्तश् छिन्नसंशयः ।।

उदीर्णः - ओं उदीर्णाय नमः

कथं चर्मचक्षुषामपि प्रत्यक्षायोग्यत्वेन उदीर्णः । उल्लसितः ।

---

१- गीता ११।३६
२- श्वे०उ० ६।१८
३- गीता ६।३९

निरुक्ति-

प्रत्यक्षाविषयत्वेन ह्युत्पन्नश्चर्मचक्षुषाम् ।
उदीर्णं इति स प्रोक्तस्सप्ताणों नयनप्रद: ।।

सर्वतश्चक्षु: - ओं सर्वतश्चक्षुषे नम:

अतो स्मदादि चक्षूंष्यपि तत्साक्षात्कारक्षमाणीति सर्वतश्चक्षु: ।अतश्छिन्नसंशयत्वं सिद्धम्, स हि स्पष्टप्रत्यक्षो संशय: ।

चक्षिङ्०व्यक्तायां वाचि" अयं दर्शने पि इति ह्ययं दर्शनकर्मा, इदितो प्यस्य न नुम् अन्ते इदित इति व्याख्यानात् । उसि प्रकरणे "चक्षे: शिच्च" इति उसि: प्रत्यय: ।

"चक्षिङ्० ख्याञ्" इत्यार्धधातुकविषय: ख्यञादेशो न, निरुचे हि सर्वशब्द: ततस्तसि प्रकरणे" आद्यादिभ्य:उपसंख्यानम्" इति तस्याकृतिगणत्वात् सर्वविभक्तिकस्तसि:, ष्टुत्वम् ।

निरुक्ति-

तत्साक्षात्कारक्षमाणि सर्वं चक्षूंष्यपि स्वत: ।
अतस्स्यात् सर्वतश्चक्षु: नवार्णो नेत्रशक्तिद: ।।

अनीश: - ओं अनीशाय नम:

शाश्वतस्थिर: - ओं शाश्वतस्थिराय नम:

तथा तत्पराधीनस्नानपरिकर्मणोष्ठ्यादिसर्वावस्थया तेष्वीशानेति अनीश: ।तत्परेषु अनीश: ।

तदधीनस्नानपरिकर्मगोष्ठ्यादिसर्वावस्थत्वात् ।

तथा असकृत् प्रत्यक्षीकृतसदातननानाबिम्बैत्यव्यवहितश्च तिष्ठति चेति शाश्वतस्थिरः । तथा च श्रीशाश्वते,

"बिम्बाकृत्यात्मना बिम्बे समागम्यावतिष्ठते" इति

निरुक्ति-

प्रोक्तो ह्यनीशो यश्चासौ तदायत्ताखिलक्रियः ।
बिम्बाकृत्यात्मना बिम्बे स्थितः स्यात् शाश्वतस्थिरः ।।

भूशयो - ओं भूशयाय नमः

भूषणो - ओं भूषणाय नमः

सन्निधियाच्नया, तद्दर्शितायतनादिभूमिषु स्वयं व्यक्तसिद्धमानुषादिलक्षणासु तदनुग्रहसुखेन शेत इति भूशयः ।

एवं विश्वजनीनेन शीलेन श्रियः पतिमात्मानं भूषयतीति भूषणः ।

"कृधमुण्डार्थेभ्यश्च" इति युच् ।

निरुक्ति-

स्वयं व्यक्तादिरूपेण क्षौ शेते भूशयश्च सः ।
एवं विश्वजनीनेन शीलेन च श्रियः पतिः ।
य आत्मानं भूषयति भूषणः परिकीर्तितः ।।

भूतिर् - ओं भूतये नमः

अशोकः - ओं अशोकाय नमः

नहि श्रीमतां अनाथगृहातिथित्वतत्संविभज्यभोज्यत्वसमानयोग-दोमत्वादिदूषणं किन्तु भूषणमेव,

सर्वबाह्यान्तरोपायरिक्तानां तेषामेव सर्वसमृद्धा विभूतिरिति भूतिः ।

तेषां सुतसुरभिसुहृद इव तद्विभूतिभूत इत्यर्थः ।

एवं कस्य चिदप्यनाथ स्याहानात्तद्विषये अशोकः, विशोकः वा ।

निरुक्ति-

यो सौ समृद्धिमैश्वर्यं भक्तानां भूतिरीरितः ।
नाथत्वाच्चापि सर्वेषां मशोकस्तेन ईरितः ।

शोकनाशनः - ओं शोकनाशनाय् नमः

तेषां स्वसम्बन्धव्यतिरेकशोकं नाशयतीति शोकनाशनः यथा- 'श्रुतं ह्येवमेव भगवद्दृशेभ्यः तरति शोकमात्मवित् इति सो हं भगवश्शोचामि तम्मा भगवान् शोकस्य पारन्तारयतु' इति[1] ।

---

१- छा०उ० ७।१।३

शोचन्ति हि स्वपरबन्धुभूतभगवद्दर्शनक्लेशविद: ।

निरुक्ति-

भक्तानां स्वेन संबन्धव्यतिरेकस्वरूपकम् ।
यच्छोकं नाशयति शोकनाशन ईरित: ।।

अर्चिष्मान् - ओं अर्चिष्मते नम:

अर्चित: - ओं अर्चिताय नम:

तत्र गूढ प्रभावो हि तद्बाह्यान्तरचक्षुरुन्नयनदाम दिव्यतेजोतिशय: अर्चिष्मान् ,अर्च-पूजायाम् इति धातो: ,

"अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसि:" इत्युणादि प्रत्यय: । ततो मतुप् । "तसौ मत्वर्थे" इति मत्वात् पदान्तस्य सोरुत्वन्न, "आदेशप्रत्यययो:" इति षत्वम्,अत्यन्तदीर्घ: नुमित्यादि: ।

सर्वमेतत् संभावयन् उदाहरति- अर्चित: ।

अर्चा अवतार: सास्य सञ्जातेति सह्यवतारो न परत्वव-द्विप्रकृष्ट: सुरनराधवतारवत् क्वचित् कदाचिद्वा,सदा सर्वेषु,क्षेत्रायतनेषु गृहेषु च प्रत्यक्षत्वात्,अस्य च तत्त्वगुह्यं भगवच्छास्त्रे बौधायनवैष्णव-स्मृतिपुराणादिषु निर्णेव्यम्, वैष्णवधर्मेषु,

"सुरुपां प्रतिमां विष्णो: प्रसन्नवदनेक्षणाम्
कृत्वात्मन: प्रीतिकरीं सुवर्णरजतादिभि:"[1]

1- वि०ध० १०३-१६

'तामर्चयित्वा प्रणमित्वा यजित्वा विचिन्तयेत्।
'विंशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम्'[1] इत्यादि

निरुक्ति
---------

भक्ताभ्यन्तरबाह्मीकवदारुन्नयनदाममु।
दिव्यं तेज:सदा यस्य सोऽचिष्मानिति कथ्यते ।।
अर्चा ह्यचवितारो स्य क्षेत्रायतनसद्मसु ।
संजाते त्यर्जित:प्रोक्त: सप्ताणां वांछितप्रद: ।।

कुम्भो - ओं कुम्भाय नम:

तत्र तै: परिचित सजातीय सौन्दर्यादिता काम्यते इति कुम्भ: । 'कमे कुम् च' इत्यौणादिक म प्रत्यय कुमादेशञ्च । अथवा-कौ - भूमौ उक्त क्षेत्रायतनादिलक्षणायां ध्यानाराधनादीनां सीम्नि जन्ममरणमात्रेण वा स्वल्पसंबन्धवत्त्यां यममयदिभयापह महाप्रभावत्वेन भातीति कुम्भ: । पृषोदरादित्वात् साधुत्वम्,श्रीपौष्करमागे,

'आभासयतिभूभागं परितस्तद्वदेव हि । स्वदेत्र:' इत्यादि ।

निरुक्ति-
---------

काम्यते यस्सजातीयै: गुणै: कुम्भ: प्रकीर्तित: ।
भातीति कुम्भो नित्यं हि षड्णां भयनाशक: ।।

---

१- वि०ध० १०३।३८

विशुद्धात्मा - ओं विशुद्धात्मने नमः

एवमशेषाश्रितेषु खिरवशेषित सर्वस्वतया विशुद्धश्चासौ आत्मा चेति वा, विशुद्धः आत्मा अस्य इति वा विशुद्धात्मा ।

निरुक्ति-

स्वाश्रितेष्वशेषेण सर्वस्वत्यागतस्सदा ।

विशुद्धात्मा ।

विशोधनः - ओं विशोधनाय नमः

तत्र दोत्रेषु न्यस्तदेहान् स्वप्नाप्त्यहान् विशोधयतीति विशोधनः । शुध-शौचे, इतिधातुः, विपूर्वः, णिच् गुणः, ततोल्युः ल्युड्वा इत्यादि ।अनः णिलोपः ।

निरुक्ति-

च पूर्वोक्त विभवः स्यात् विशोधनः ।

अनिरुद्धो - ओं अनिरुद्धाय नमः

अप्रतिरथः - ओं अप्रतिरथाय नमः

अथ दोत्रविशेषेषु पूर्वोक्तव्यूहविभवानां स्थितिविशेषः,

"जनार्दनाख्यया देवस्त्वनिरुद्धो जगत्प्रभुः।
भूभागे वासुभाण्डाख्ये नित्यसन्निहितस्थितः"

इति अनिरुद्धः। स एव जनार्दनाख्यत्वादनिष्ट जनार्दने अप्रतिपक्षत्वात् अप्रतिरथः।

रमु क्रीडायाम् इति धातोः "हनि कुषि नीरमिकाशिभ्यः क्थन्" इति क्थन् अनिट्।

निरुक्ति

वासुभाण्डाख्यभूभागे नित्यसन्निहितस्थितः।
अनिरुद्धः इति ख्यातो वरुणो मनुरुत्तमः॥
प्रतिपक्षस्य राहित्यात्, बहूवानिष्टजनार्दनः।
विख्यातो ह्यप्रतिरथः नवार्णः शत्रुनाशकः॥

प्रद्युम्नो, - ओं प्रद्युम्नाय नमः

मितविक्रमः- ओं अमितविक्रमाय नमः

आत्मप्रद्योतनात् प्रद्युम्नः, 'प्रद्योतयिता' इति मोक्षः, पान्चरात्रे मूल०सं० प्रद्युम्नः - पुरुषोत्तमः।

"अधिष्ठाय स्थिरस्सादात् भक्तानां सुगतिप्रदः"।
त्रैलोक्येप्यपर्यवसितविक्रमत्वात् त्रिविक्रमः, अमितविक्रमः,
"यामुनं जलमाश्रित्य देवदेवस्त्रिविक्रमः।
स्थितः कमलसम्भूतनुणां च सुगतिप्रदः॥

निरुक्ति-

आत्मप्रद्योतनत्वाच्च प्रद्युम्न इति कथ्यते ।
अधिष्ठाय स्थिरस्सादात् भक्तानां सुगतिप्रदः ।
लोकत्रयेप्यपर्याप्तविक्रमो मितविक्रमः ।।

कालनेमिनिहा - ओं कालनेमिनिहने नमः

एतेषु दोत्रेषु स्थित्वा कलिकल्पषापहः,कालनेमिनिहा ।

अविद्याख्या च या नेमिः,कालचक्रस्य दुर्धरा ।
सा मथीयं समाश्रित्य विग्रहं विधुनोति च ।।
ध्यायेवत्प्रसरघ्नं च देवम्" इति हि कालनेमिघ्नध्यानम् ।

निरुक्ति-

कालचक्रस्य या नेमिरविद्याख्या च दुर्धरा।
तां नाशयति यश्चासौ कालनेमिनिहा स्मृतः ।।

शौरिः - ओं शौरये नमः

"उत्पलावर्तके देशे शौरिसंज्ञो च्युतः स्थितः" इति शौरिः ।
शूरस्य वसुदेवस्य अपत्यम् इति शौरिः ।

निरुक्ति-

नवाद्वारो मनुरयमविद्यामूलमोचकः ।
शौरिनाम्ना स्थितश्शौरिः उत्पलावर्तके शुभे ।।

शूरः - ओं शूराय नमः

"धराधरे चित्रकूटे रक्षःदायकरो महान् ।
संस्थितश्च परो रामः पद्मपत्रायतेक्षणः"
इति शूरः, रामः । "शु-गतौ" इति धातोः "शु सिचिमिना दीर्घश्च"
इति रक् प्रत्ययः ।

निरुक्ति-

सर्वरक्षःदायकरः शूर इत्यभिधीयते ।"

शूरजनेश्वरः - ओं शूरजनेश्वराय नमः

त्रिलोकात्मा - ओं त्रिलोकात्मने नमः

स एव विशेष्यते शूरजनेश्वरः ।
"मगधामण्डले विप्र महाबोध धराश्रितः ।
संस्थितो लोकनाथात्मा देवदेवो जनार्दनः ।।
संस्थितो लोकनाथात्मा देवदेवो जनार्दनः ।। त्रीन् लोकान् सातत्येन गच्छतीति
इति त्रिलोकात्मा, भक्तानुग्रहाय त्रीन् लोकान् सातत्येन गच्छतीति" इति मनिन् प्रत्ययः ।
अत सातत्यगमने" "सातिभ्याम्मनिन्मनिणौ" इति मनिन् प्रत्ययः ।

निरुक्ति-

पराक्रमजने शश्वत् स्मृतश्शूरजनेश्वरः
यस्मातत्थेन लोकांस्त्रीन् भक्तानुग्रहकाम्यया ।
गच्छतीति त्रिलोकात्मा वस्वणो भूतिदायकः ।।

त्रिलोकेशः - ओं त्रिलोकेशाय नमः

शुभ मासाद्य भूभागं प्राग्ज्योतिषपुरे तथा ।
देवं विश्वेश्वराख्यं तु स्थितमेत्य स्वगोचरात् इति । त्रिलोकेशः ।

केशवः क्लेशहा लोके द्वैरूप्येण दितो स्थितः ।
मथुराख्ये महाक्षेत्रे वाराणस्यामपि द्विज इति ।
त्रिलोकानामीशः, त्रिलोकेशः ।

निरुक्ति-

त्रिलोकानामीशतया त्रिलोकेशः प्रकीर्तितः ।

केशवः - ओं केशवाय नमः

क इति ब्रह्मणो नाम ईशो हं सर्वदेहिनाम् ।[१]
आवां तवाङ्गे संभूतो तस्मात् केशवनामवान् ।।

---

१- हरि० २७९-४७ ।

इति निरुक्तिः ।

केशिनमवति हिनस्ति इति वा केशवः ।

कै शब्दे इति धातोः, 'अन्येष्वपि ० इति डः । टिलोपः, गुणः । ततो स्यापि केशरूपत्वात् ।

निरुक्ति-

'ब्रह्मेशयोः स्वाङ्गजत्वात् केशवः परिकीर्तितः ।

केशिहा - ओं केशिघ्ने नमः

केशवं केशिहन्तारम्' इतिवत् स्वयमेव निर्वचनान्तरमाह केशिहा इति, केशिनं कं नरवन्तं तुरगदानवं हन्तीति केशिहा ।

निरुक्तिः-

'असुरं केशिनामानं हतवान् केशिहा स्मृतः' ।

हरिः - ओं हरये नमः

'गिरौ गोवर्धनाख्ये तु देवः सर्वेश्वरो हरिः ।

संस्थितः पूजितः स्थाने' इति हरिः । हृञ् हरणे' इति धातोः 'सर्वधातुभ्यः, इन्' इति वर्तमाने 'हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च' इति प्रकृते इन् प्रत्ययः ।

निरुक्ति-

'भक्तानां दुःखहरणाद्वर्णश्रैष्ठ्याद्धरिः स्मृतः' ।

कामदेव: - ओं कामदेवाय नम:

कामपाल: - ओं कामपालाय नम:

"कामदेवस्तु भगवान् सर्वेषां सर्वकामद: ।
शंकरालयमासाद्य संस्थितो प्सरसार्चित:" इति कामदेव: ।
दीव्यतिदानकर्मा"

स एव दत्तानुपालनात् कामपाल: । स एव दत्तं कामं पालयतीति रक्षतीति कामपाल: इति वा ।

"पाल-रक्षणे" चुरादि: । तत: पचाद्यच्, णिलोप:, काम: कर्मणि घञि व्युत्पादित: ।

निरुक्ति-

सर्वेषां कामदत्वाच्च कामदेव इतीरित: ।
दत्त्वा तु पालनकर: कामपाल: प्रकीर्तित: ।।

कामी - ओं कामिने नम:

कान्त: - ओं कान्ताय नम:

प्रदेयातिशयात् कामी । सच कामा: प्रदेयार्था: अतिशयिता:, अस्य सन्तीति कामो, काम उक्त:, ततो तिशायने मत्वर्थीय इनि: ।

स एव स्वयमेव कमनीय: कान्त: ।

अतो ह्यप्सरसार्चित: एवमुत्तरत्रापि संज्ञासामर्थ्यादिना तत्तत्स्तोत्र संबन्ध अहनीय: ।

निरुक्ति-

प्रदेयातिशयात् कामो ।
कान्त: स्यात् कमनीयक: ।

कृतागम: - ओं कृतागमाय नम:

अनिर्देश्यवपु: - ओं अनिर्देश्यवपुषे नम:

अथ शक्तीशावतार: ,
नानामन्त्रमयीं दिव्यां व्यन्त्यत्यमलात्मनाम्' इति कृतागम: ।
तत्तद्युगगुणानुग्राहकरूपवैचित्र्यात् अनिर्देश्यवपु:, अनिर्देश्यम् इदम् ईदृशमिति निर्देष्टुम् अशक्यं वपु: शरीरमस्येति विग्रह: ।युगानुसारिकान्तिश्च इति ।

निरुक्ति-

मन्त्रविधाव्यन्जकत्वात् कृतागम इतीरित: ।
युगानुसारिरूपत्वात् अनिर्देश्यवपु: स्मृत: ।।

विष्णुर् - ओं विष्णवे नम:

एवं व्याप्तिनियमनादिशक्तिद्वारा विश्वव्याप्ते: विष्णु: ।
'सर्वशक्त्यात्मने' इति तन्मन्त्रवर्णे आदित्यपुराणे-

'रास्मादिष्टमिदं सर्वं तस्य शक्त्या महात्मनः ।'

उयोगें 'विष्णुर्विक्रमणाद्देवः' इति वा

निरुक्ति-

स्वशक्त्या जातो व्याप्तेर्वा विक्रमणात् स्वतः ।

विष्णुः स्मृतो विशेषेण ।

वीरो - ओं वीराय नमः

आज्ञाप्रतीघाकेणैव गदाचक्रद्वयेन तु ।

प्रेरितेन हिनस्त्याशु साधुसन्तापकारिणः' इति वीरः ।

निरुक्ति-

वीरः स्यात्साधुदुःखहा' ।

नन्तो,- ओं अनन्ताय नमः

धनञ्जय - ओं धनञ्जयाय नमः

नास्य देशकालवस्तुतो वधयस्सन्तीति अनन्तः ।

'अनन्तमूर्तये' इतिमन्त्रवणात् ।

'नास्त्यन्तो विस्तरस्य मे'[1]

'अथैतस्यैवान्तो नास्ति यद्ब्रह्म'[2] इति

१- गीता १०-१९

२-तै० उ० आ० १ ।

सदा सर्वत्र सर्वथा च प्रवृत्तस्वभाव इत्यर्थः ,न च वस्तुपरिच्छेदाभावो वस्त्वभेदः देशकालयोस्तथात्वप्रसङ्गात् न चैतदिष्टमानन्त्यं गुणविभूतिभ्यामप्युपमाधत्ते - धनन्जयः ।

प्रेप्सोपार्जनलोभगृहनोपजीवनादियोग्यत्वाधिक्येन हेमरत्नादिकं धनमधः करोतीति ।

"संज्ञायां भृतवृजिधारिसहितपिदमः" इति खच् ।

ब्रह्मण्यो - ओं ब्रह्मण्याय नमः

इह हि बृहत्सु ब्रह्म शब्दं प्रयुन्क्ते तत्र तत्र तत्तत्कर्मज्ञानाभ्यामशेष भोगमोक्षाभोक्तृत्वबृहत्त्वात् जीवात्मापि ब्रह्मोच्यते, "तज्ज्ञानं ब्रह्मसंज्ञितम्" निर्दोषं हि समं ब्रह्म[1] इत्यादिषु । ताभ्यां स्थितिभोगादिस्वावस्थाहेतुत्वेन हितः ब्रह्मण्यः । तत्कार्यं महदहंकारादिप्रभृति च ब्रह्म,अस्तोकविस्तरत्वात्[2] तस्मादेतत् ब्रह्म नाम रुपमन्नं च जायते" । इत्यादौ ।

निरुक्ति-

देशतः कालतो वापि गुणतो वस्तुतो पि वा ।
अवधिर्यस्य नास्तीति सो नन्तः समुदाहृतः ।।
प्रेप्सोपार्जनलोभादियोग्यत्वाधिक्यतस्ततः ।
मणिमौक्तिकरत्नानि हेमरुप्यादिकं धनम् ।।
यो धः करोति सततं धनन्जय इतीरितः ।
जीवात्मा प्रकृतिश्चापि ब्रह्मेति व्यपदिश्यते ।

---

१- गी० ५।१९

२-मु०उ० १।१।५

तस्म्या यः स्थितिभोगादेस्सर्वावस्थासु कारणम् ।
ब्रह्मण्यः स च विज्ञेयस्सप्ताणां भोगदायकः ।।

ब्रह्मकृद्ब्रह्मा - ओं ब्रह्मकृद्ब्रह्मणे नमः

तस्य कर्ता ब्रह्मा यस्य सर्वथा नियाम्यः, सः ब्रह्मकृद्ब्रह्मा ।

महदादितमः कार्यं ब्रह्मेति ह्यभिधीयते ।
तस्य कर्ता स्वयं ब्रह्मा नियाम्यो यस्य सर्वदा ।
स तु स्यात् ब्रह्मकृद्ब्रह्मा नवार्णस्सर्वशक्तिदः ।।

ब्रह्म - ओं ब्रह्मणे नमः

एवं व्यक्ताव्यक्तसमष्टिव्यष्टिपुरुषान् बृंहयति निरतिशय-कल्याणगुणगणैः स्वरूपगुणविभवैः स्वयं च बृंहतीति अनापेक्षितं वेदान्तवेद्यं परं ब्रह्म, ब्रह्म ।

'बृंहेर्नोऽच्च' इति मनिन्प्रत्ययः, नलोपश्च । 'बृहत्वाद्बृंहणत्वाच्च ब्रह्मेति परिकीर्त्यते' इति ।

निरुक्ति-

व्यक्ताव्यक्त समष्ट्यादिपुरुषांश्चैव नित्यशः ।
गुणैश्च कल्याणतमैर्ब्रह्म बृंहयतीति च ।
रूपैः स्वरूपेण गुणैर्विभवैश्च स्वयं मुहुः ।
ब्रह्मेति स तु वा ब्रह्म षडर्णस्सन्ततिप्रदः ।।

ब्रह्मविवर्धन: - ओं ब्रह्मविवर्धनाय नम:

ब्रह्मवित् - ओं ब्रह्मविदे नम:

सर्वस्यास्य निमित्तं तप उपलक्षितो धर्मोऽपि ब्रह्म,
'तपो ब्रह्म' इति श्रुते: तै०उपनिषदे । तं विवर्धयतीति ब्रह्मविवर्धन: ।

तत्प्रतिपादको वेदोऽपि ब्रह्म, 'ब्रह्माध्येष्यमाण:, इत्यादे:

'अनन्ता वै वेदा:' काठकम् ।

तानप्यवधिना वेत्तीति 'ब्रह्मवित्' ।

अनादिनिधनं ब्रह्म न देवा नर्षयो विदु: ।
एकस्तद्वेदभगवान् धाता नारायण स्वयम् ।।

निरुक्ति-

तपो विवर्धनान्नित्यं स्मृतो ब्रह्मविवर्धन: ।
यो वेदानन्ततो वेत्ति स ब्रह्मविद् उदीरित: ।।

ब्राह्मणो - ओं ब्राह्मणाय नम:

ब्रह्मी - ओं ब्रह्मिणे नम:

वैधव्यवस्थापनार्थं स्वयमत्रिगोत्रादौ दत्तात्रेयादिरुपेण
ब्राह्मणो भवति, इति ब्राह्मण: । 'ब्रह्म नयत्यणति' इति वानैरुक्ता: ।।
सर्वमेतत्प्रमाणप्रमेयरुपं ब्रह्म स्वमिति ब्रह्मी ।
'सर्वब्रह्ममयो हरि:' इति ।

निरुक्ति-

दत्तात्रेयादि रूपेण ह्युदीर्णो ब्रह्मण: स्मृत: ।
पठताञ्ञाथ वेदस्य ब्राह्मण: परिकीर्तित: ।।
मानमेयस्वरूपत्वात् स्वयं ब्रह्मेति शब्दते ।।

ब्रह्मज्ञो - ओं ब्रह्मज्ञाय नम:

ब्राह्मणप्रिय: - ओं ब्राह्मणप्रियाय नम:

वेदान्तर्थपर्यन्तं साक्षात्करोतीति ब्रह्मज्ञ:, "वेदविदेव चाहम्" इति। तदधिकारिणो ब्राह्मणा: प्रिया अस्येति ब्राह्मणप्रिय:,यथा-
घ्नन्तं शपन्तं परुषं वदन्तं यो ब्राह्मणं न प्रणमेद्यथाहम् इत्यादि

"ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधानामत्परमा भक्तास्तेऽतीव मे प्रिया:"[१]
यद्ब्राह्मणस्य मुखत:"
"विप्रप्रसादादसुरान्जयामि"[२]
"किं पुनर्ब्राह्मणा: पुण्या:"[३]
"महतो महीयान्",[४]
"परात्परं यन्महतो महान्तम्"[५]
"महान्तं विभुमात्मानम्"[६]

---

१- गीता १२।२०
२- वि०ध०५२।५२२
३- गीता ९।३३
४- तै०उ० १
५- तै०उ० ३।५
६- कठ०उ० २-४

'महत: परमो महान्' इत्यादि ।

निरुक्ति-

यो वेदानर्थज्ञो वेत्ति सो पि ब्रह्मज्ञ विश्रुत: ।
वेदाधिकारिणो विप्रा: प्रिया यस्येति वै सदा ।
ब्राह्मणप्रिय इत्युक्तो नवाणों धर्मदो मनु: ।।

महाक्रमो - ओं महाक्रमाय नम:

अथैवमुत्सुकीकृतेषु वात्सल्यनोप्यानन्त्यं परमतुङ्गमात्मानं परमनिम्नमवपातालाज्जीवाना रोहयतो महत्यारोहणसोपानपर्वानुपूर्व्यस्येति महाक्रम: ।

यथा जननी, स्तनन्धयमादौ स्तन्यन्धापयति, अथ दुग्धम् अथाहारम्, भोगात् गमयति- स्वमयं सुकृतिनम् अद्वेष्यास्तिक्या भिमुख्यानुवर्तनज्ञानभक्तिविस्रम्भक्रमेणैव प्रापयति, अभ्युत्थानार्थं छन्दानुवर्तनार्थञ्च, अन्यथा, 'बन्धायैव भवत्येषा अविधा ह्यक्रमोज्झिता' अत: खल्वाहु: -

'जन्मान्तरसहस्रेषु तपोध्यानसमाधिभि: ।
नराणां क्षीणपापानां कृष्णे भक्ति: प्रजायते' इति
'बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते'[1]

---

१- गीता ७।१९

"अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय"[1]

निरुक्ति-

परमोन्नतिमात्मानं सन्निम्नात् भवपातकात् ।
जीवान् समारोहयतो ज्ञानभक्त्यादिरूपिणी ।।
एवानुपूर्वी यस्यास्ति महाक्रम इतीरितः ।।

महाकर्मा - ओं महाकर्मणे नमः

कृमिकीटादिभावे दुर्जरपरोच्छिष्टसिक्थरूपमात्रं जन्तुं स्वमहाविभवानुभवाभियुक्तं करोतीत्यतिविस्मयनीयमहदस्य कर्मेति महाकर्मा ।

निरुक्ति-

अत्यन्तहीनान् जन्तूंश्च योग्यान् स्वानुभवस्य च ।
करोति महदाश्चर्यं कर्म यस्यास्ति सर्वदा ।
महाकर्मा स विज्ञेयो ह्यष्टाणोर्मनुरुत्तमः ।।

महातेजा - ओं महातेजसे नमः

एवं तामसानामप्यनाद्यविद्यातमस्तस्करतेजस्त्वात् महातेजा ।

निरुक्ति-

अनाद्यविद्यास्थतमोहारि तेजो महद्यतः ।
महातेजा ह्ययं स्यात्तस्तेजोदो वसुवर्णकः ।।

1- गीता ८।८

महोरग:- ओं महोरगाय नम:

कथमयमतिमहान् दवीयसां नेदीयान् विषयान्तरवत् तत्करणान्यनुप्रविश्य तत्रान्त: करणानुप्रवेशात् - महोरग: ।उर: प्रदर्शितं हृदयमुर: यद्द्वारा तान् गच्छतीति -

"उरसो लोपश्च" इति डप्रत्यय: ।

"यो न वित्तैर्न विभवै: न वासोभि र्न भूषणै: ।
तोष्यते हृदयेनैव कस्तमीशन्न पूजयेत् ।। इति ।

निरुक्ति-

महोरग इति ख्यातश्चित्तद्वारा प्रवेशनात् ।।

महाक्रतुर - ओं महाक्रतवे नम:

महायज्वा - ओं महायज्वने नम:

महत्सर्वसुकरमाराधनमस्येति महाक्रतु: ।

समर्पणसंस्कारस्वादुकृतै:, आगमशास्त्रकारितसर्वव्यापारैराराध्यत्वात् ।यथा-

"यत्करोषि[1]" इत्यादि

---

१- गीता ९।२७

स्वायाजिनामन्यथाजिभ्यो प्यत्युत्कर्णात् महायज्वा
'सुयजोड्.०वनिप्' यथा-

'तेषामेकान्तिनश्श्रेष्ठास्ते चैवानन्यदेवता:' इति ।

निरुक्ति-

सर्वैश्च सुकरा पूजा यस्य स्यात्स महाक्रतु: ।
देवतान्तरयाजिभ्य: स्वयाज्युत्कृष्टकारक: ।
महायज्वा समुद्दिष्ट: सत्कर्मफलदो मनु: ।।

महायज्ञो - ओं महायज्ञाय नम:

अभिगमनभोगमधुपर्कादिसाष्टाड्.०गयागोप्यन्येभ्यस्तथेति महायज्ञ:
यथा- 'सर्वेषां किल धर्माणामुत्तमो वैष्णवो विधि:' ।
रक्षते भगवान् विष्णुर्भक्तानात्मशरीरवत्'
या: क्रियास्संप्रयुक्तास्स्युरेकान्तगतबुद्धिभि: ।
तास्सर्वा: शिरसा देव: प्रतिगृह्णाति वै स्वयम् ।इति
'अहो ह्येकान्तिनस्सर्वान् प्रीणाति भगवान् हरि: ।
विधिप्रयुक्तां पूजां च गृह्णाति शिरसा स्वयम् ।[1]
'न तत्र पशुघातो भूत्'

---
१- भा०शा० ३३७-८

निरुक्ति-

अन्येभ्यो देवयागेभ्य: स्वयागोत्कृष्टकारक: ।
महायज्ञ: समाख्यातो ह्यष्टाणों हरियागद: ।।

महाहवि: - ओं महाहविषे नम:

अहिंस्रसात्त्विकोपनिषदानि हवींष्यस्येतिमहाहवि: ।

यथा- "ब्रह्मार्पणं ब्रह्महवि:"[1] इत्यादि,
"ज्ञानयज्ञेन"[2]
"योऽहमस्मि स सन्यजे यश्चास्मि नतमन्तरेमि"[3]
"इदमहम्मामममृत योनौ सूर्ये ज्योतिषि जुहोमि"[4]
"श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञ"[5]
इति च एवं मन: शरीरयो: व्यापारसमाराध्यत्वम् ।

निरुक्ति-

"आत्मरुपं हविर्यस्य स महाहविरुच्यते ।

---

१- गीता ४।२४
२- गीता ९।१५
३- ३ आ० ७।४७
४- तै०उ०२।२५
५- गीता ४।३३

स्तव्य: - ओं स्तव्याय नम:

स्तवमर्हतीति, यत् अनध्यारोप्यमहामङ्गलनित्यनिरवधिक-निरवद्यगुणो नाम सहस्रव्यपदेश्य:, पतिरेव स्तुतिमर्हति, इति न तु विपरीतगुणो देवतान्तरादि:, बार्हस्पत्यस्मृतौ,

"आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्तारं को न मुच्यते बन्धनात्" [1] ।।

"इतीदं कीर्तनीयस्य" इत्यादि ।

निरुक्ति-

चेतश्शरीरयोर्जन्तोर्व्यापाराराध्यता हरे: ।
उक्ता नारायणस्याथ वागाराध्यत्वमुच्यते ।
स्मृत: स्तुत्यर्हणात् स्तव्य: गडणो बन्धमोचक: ।।

स्तवप्रिय: -ओं स्तवप्रियाय नम:

यथाकथञ्चित्, यया कयाचिद्भाणया, येन केनापि, तेजस्कर: तिरस्कारी वा, गुणसंकीर्तनाभिमानेन क्रियमाणस्तव: स्वविषय: प्रियतमो स्येति स्तवप्रिय:, अकण्ठकमेतत् घण्टाकर्णादिवृत्ते-

निरुक्ति-

यया कयाचिद्भारत्या येन केनापि जन्तुना ।
यथाकथंचित् कथितो यस्य प्रियतमस्तव: ।।
स्तवप्रिय: स कथितो वरवर्ण: प्रीतिवर्धक: ।।

---

1- बा०स्मृ०

स्तोत्रम् - ओं स्तोत्राय नमः

स्तुतः - ओं स्तुताय नमः

स्वस्तोत्रमपि प्रसन्नेनानेन करणभूतेन निष्पाद्यते इति स्तोत्रम्

'दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे' इति ष्ट्रन् ।

इदन्तु ध्रुवस्तवे द्रष्टव्यम् । सहस्रफणात्रयीमयादिभिस्सूरिभिः,

निरुक्ति -

अनन्तैः, ब्रह्मादिभिरस्मदादिभिश्चाविशेषेणानवधौ काले स्तुत इति

स्तुतः । स्वेनैव निष्पाद्यतया स्वस्तुतेः स्तोत्रमुच्यते ।

शेषशेषासनाद्यैर्यः सूरिभिश्चास्मदादिभिः ।

स्तुतत्वादविशेषेण स्तुत इत्यभिधीयते ।।

स्तोता - ओं स्तोत्रे नमः

रणप्रियः - ओं रणप्रियाय नमः

स्वस्तोतारं स्तोतुं शीलमस्येति स्तोता । [1]

'यं स्तुवन् स्तव्यतामेति वन्दमानश्च वन्द्यताम्'

इति एतत् कैलासयात्रायाम् ।

श्रीमद्रामायणमहाभारतप्रभृत्यभिष्टुताभीष्टदिव्यचेष्टितः रणप्रियः।

---

१- वि०ध० ७५-५५

"सुहृत्प्रीणनरणादिचेष्टितो हि सः ,यथा-

"ततस्सकामं सुग्रीवमङ्गदं च महाबलम् ।
चकार राघवःप्रीतो हत्वा रावणमाहवे ।।

निरुक्ति-

स्तोतारं परं स्तोतुं शीलं यस्यास्ति सर्वदा ।
स्तोता स स्यात् पञ्चवर्णः सर्वस्तुत्यत्वदो मनुः ।
सुहृत्प्रियं युद्धकर्म यस्यास्ति स रणप्रियः ।

पूर्णः - ओं पूर्णाय नमः

बहुव्यया यासत्कारविरहे पि स्तोत्रादिमात्रसाध्यौयम् , कुतः यत

पूर्णः ।स्वत स्वा वाप्तसमस्तकामः ।

निरुक्ति-

अवाप्तसर्वकामत्वं यस्यासौ पूर्ण उच्यते ।

पूरयिता - ओं पूरयित्रे नमः

पुण्यः - ओं पुण्याय नमः

किन्तर्हि पूरणीयवत् स्तोत्रादिकमपेक्षेत, तन्मनोरथपूरण-

शीलत्वात् तदाह-पूरयिता ।

पातकिनो पि स्वस्तुत्यर्थिन् पुनातीति पुण्यः ।

"पूनो मण्णुदूस्वश्च"

निरुक्ति-

'सदा पूरयितुं शीलं यस्य स्तोतृमनोरथान्
स पूरयिता ।
पुण्यः यो सौ पातकिपावनः ।

पुण्यकीर्तिर् - ओं पुण्यकीर्तये नमः

संकीर्तनमपि तथेति पुण्यकीर्तिः ।
नामसंकीर्तनं भक्त्या विलायनमनुत्तमम् ।
मैत्रेयाशेषपापानां धातूनामिव पावकः ।
अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।[1]
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ।।

'कलौ संकीर्त्य केशवम्'[2]
अत एव हि तत्परसूक्तादीनां पङ्क्तिपावनत्व श्रुतिः ।

निरुक्ति-

पुण्यः श्लोकोऽस्ति यस्येति पुण्यकीर्तिः स तु स्मृतः' ।

---

१- वि०पु० ८-९१
२- वि०पु० ६।२।१७

अनामय: - ओं अनामयाय नम:

एवं स्वसंस्पर्शदिव्यौषधेन अनामय: ।

संसारमहाव्याधिविरोधी भवो हि व्याधि:, भगवदनुभवशक्ति-प्रतिबन्धकत्वात्,

"व्याधिभि: परिपूर्णोऽस्मि" इति तज्ज्ञवचनात् ।।

निरुक्ति:-

"संसाराख्यमहाव्याधे: विरोधित्वात् अनामय: ।

मनोजवस् - ओं मनोजवाय नम:

तीर्थकरो - ओं तीर्थकराय नम:

उक्तेषु शीघ्रकारित्वात् मनोजव:, जगौ हि

"क्षिप्रं भवति धर्मात्मा"[1]

सप्तजन्मकृतं पापं स्वल्पं वा यदि वा बहु ।

विष्णोरालयविन्यासप्रारम्भादेव नश्यति" ।। इति च

आत्मवत् स्मरणकीर्तनादिमात्रेण सर्वपावनानां गङ्गापुष्करादि-तीर्थानां हेतुत्वात् तीर्थकर: ।

श्रुतिस्मृत्यादिसत्समयप्रवर्तनाद्वा[2], यथा-

"योगो ज्ञानं तथा सांख्यम्"

१- गीता ९।३१

२- भा०आनु० १५०-१४१

इत्यादि अणाघदुष्प्रवेशसिन्धोरिवात्मन: । प्रवेशावतार सोपान-
करणाद्वा ।

निरुक्ति-

भक्तानां सम्पद: शीघ्रं करोतीति मनोजव: ।
गङ्गादितीर्थहेतुत्वात् श्रुतिस्मृत्यो: प्रवर्तनात् ।
आत्मप्रवेशसोपानं कृत्वा तीर्थंकर: स्मृत: ।।

वसुरेता: - ओं वसुरेतसे नम:

तत्र कृष्णावतार: दिव्यज्योतिरुपादानहेतुत्वात् वसुरेता: ।
वस्विति हि ज्योति: पर्याय: ।
"उज्जहारात्मन: केशौ सितकृष्णौ महामुने"[1]
"मम ते केशसंज्ञिता:"[2]
इति केशशब्दश्च व्याख्यात: ।

निरुक्ति-

वसुशब्दो ज्योतिरर्थ: रेतस्तत्कारणं मतम् ।
दिव्यज्योति: कारणत्वात् वसुरेता: प्रकीर्तित: ।।

---

१-वि०पु० ५।१।६०
२- मा०शा० ३४२।४८

वसुप्रद: - ओं वसुप्रदाय:

वसुप्रदो - ओं वसुप्रदाय नम:

परमनिधिमात्मानं देवकीवसुदेवाभ्यां पुत्रत्वेन प्रददातीति वसुप्रद: । ताभ्यां जात्पितु: स्वस्य पितृत्वरुपं महत्तेज: प्रददातीति पुनश्च वसुप्रद: ।

निरुक्ति-

देवकीवसुदेवाभ्यामात्मरुपं महद्धनम् ।
पुत्रत्वेन प्रकर्षेण ददातीति वसुप्रद: ।।
देवकीवसुदेवाभ्यां स्वपितृत्वं महद्वसु ।
तेजो य: प्रददातीति वसुप्रद इतीरित: ।।

वासुदेवो; ओं वासुदेवाय नम:

वसुदेवापत्यत्वाच्च वासुदेव: ।

निरुक्ति-

"वसुदेवापत्यतश्च वासुदेव: प्रकीर्तित: ।।

वसुर् -ओं वसवे नमः

वसुमनाः - ओं वसुमनसे नमः

एतदवतारागमं क्षीरार्णवनिकेतनत्वमाह - वसुः ।

तत्र वसतीति यथा

"स लोकानां हितार्थाय क्षीरोदे वसति प्रभुः[1]"

"एषः नारायणश्रीमान् क्षीरार्णवनिकेतनः ।

नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम्[2]" ।इत्यादि ।

तत्र लक्ष्मीजन्मभूमौ वसतो'पि वसौ वसुदेवे मनो स्येति वसुमनाः ।

देवदत्तो दत्तः,सत्यभामा भामेतिवत् वसुः,वसुदेवः इति भाष्यादि ।

निरुक्ति-

वसतीति वसुर्लोकहितेच्छुः क्षीरसागरे ।

जन्मभूम्यर्णवे लक्ष्म्याः वसतो यस्य वै मनः ।

अस्तीति वसुदेवे हि स स्यात् सुमनाः परम् ॥

---

1-भा०सं०४७।२६

2- हरि० ११३।६२

हवि: - ओं हविषे नम:

देवकिवसुदेवसमीपवासरु चिरपि अविदप्रेमाकुलाभ्यां ताभ्यां कंसात् गुप्तये नन्दयशोदाभ्यामादीयतेति हवि: ।

निरुक्ति-

नन्दगोपयशोदाभ्यां कंसोपद्रवशान्तये ।
आदीयते स्वीक्रियते स हवि: परिकीर्तित: ।।

सद्गति: - ओं सद्गतये नम:

सत्कृति:- ओं सत्कृतये नम:

जायमान एव असुरकृतापदपनोदन: सतां गति: सद्गति:, यथा- सन्तसन्तोषमधिकं प्रथमं चण्डमारुत:[1] इति

सत्य: सकलसंसारनिगलच्छेदिभ्य: दधिनवनीतचौरणोलूखलबन्धरिङ्खण रासक्रीडादिका मुग्धकृतयो स्येति सत्कृति- यथा-
जन्म कर्म च मे दिव्यम्[2] इत्यादि ।

निरुक्ति-

उत्पन्न एवकंसादिकृतबाधापनोदनात् ।
सतां प्राप्यतया चैव सद्गति: समुदाहृत: ।।
रासक्रीडादिकृतय: सत्यो यस्य च सत्कृति:।।

---

१- वि०पु० ५।३।४
२-गीता १०।३६

सत्ता - ओं सत्तायै नमः

सद्भूतिः- ओं सद्भूतये नमः

सत्तापि सतां स्वयमेवेति सत्ता ।

न हि तदव्यतिरेकेण किंचित् स्यात् ।

'नतदस्ति विना यत् स्यात् मया'[1] इति

सतां पुत्रो मित्रबन्धुः दूतः सारथिः अन्यच्च तद्भवन् सद्भतिः ।

'कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः । कृष्णः

परायणं तेषां' इति

निरुक्ति-

स्वयमेव सतांसत्ता यस्मात् सत्तेति कीर्त्यते ।

सतां पुत्रकलत्रादिभूत्यासद्भूति रुच्यते ।।

सत्परायणः - ओं सत्परायणाय नमः

सत्परायणम् आह च - -

'मामेवैष्यसि'[2] इति

पुल्लिङ्गत्वे सन्तो स्य परायणमिति सत्परायणः यथा-

'मम प्राणा हि पाण्डवाः'[3]

'पाण्डवानां भवान्नाथः, भवन्तं च श्रितावयम् ।

ज्ञानी त्वात्मैव मे मतम्'[4]

---

१- गीता ४।६

२- गीता १८।६५

३- भा०उ० ९०।३३

४- गीता ७।१८

निरुक्ति-

सतां परं स्यादयनं सन्तो यस्यांश्चायनम् ।
स सत्परायणं ख्यातो यद्वा स्यात् सत्परायण: ।।

शूरसेनो - ओं शूरसेनाय नम:

यदुश्रेष्ठ: - ओं यदुश्रेष्ठाय:

यादव पाण्डवादयो भूभारावतरणे च शूरा: विक्रान्ता: सेना: तदनुग्रहात्साहायकपरिवारसहिता:,यादवपाण्डवादिपृतना यस्येति शूरसेन:,

अयं स कथ्यते प्राज्ञै: पुराणार्थविशारदै: [1]
गोपालो यादवं वंशं मग्नमभ्युद्धरिष्यति

निरुक्ति-

भूभारहरणार्थाय यादवा: पाण्डवाश्च ये ।
शूरास्सहाया यस्येति शूरसेन: स कथ्यते ।।
मग्नं तु यादवं वंशमुद्धरिष्यति यश्च स: ।
यदुश्रेष्ठ इति ख्यात:,वरूणो वंशवर्धन: ।।

सन्निवास: - ओं सन्निवासाय नम:

मनुष्यधर्मशीलत्वे पि सतां सनकादीनां विश्रान्तिभूमि: सन्निवास:,यथा-

सनन्दनाद्यैर्मुनिभि: सिद्धयोगैरकल्मषै: ।
संचिन्त्यमानं तत्रस्थं नासाग्रन्यस्तलोचनै: [2] ।।

---

१- वि०पु०

२- वि०पु० ५।८४२

निरुक्ति-

सनकादिनिवासो हि मनुष्यत्वेपि यस्सदा ।

सन्निवास: स विज्ञेयो ह्यष्टार्णः स्थानदायक: ।।

सुयामुन: - ओं सुयामुनाय नम:

शोभनं पावनं मनोहरं यमुनासंबन्धिजलक्रीडापुष्पापचयरास-

क्रीडादि यस्येति सुयामुन: ।

निरुक्ति-

गोपीभिर्यमुनायां तु शोभनं पावनं महत् ।

जलक्रीडादि यस्येति सुयामुन इतीरित: ।।

भूतावासो - ओं भूतावासाय नम:

वासुदेव:- ओं वासुदेवाय नम:

कृष्णत्वे निह्नुतपरभावत्वात् -

'वसन्ति त्वयि भूतानि भूतावासस्ततो हरि:' इति

भूतावास: । वसति:, आङ्पूर्व:, 'हलश्च' इति अधिकरणे घञ् ।

भवते: कर्तरि क्त: । दीर्घस्संहित: ।

वसुदेवापत्यत्वे द्विषट्काध्यात्मं नियच्छतीति वासुदेव: ।

अथवा वासुश्चासौ देवश्च इति वासुदेव: । अत एव हि च-

'जाग्रद्व्यूहवासुदेवो माथुरायाद्भुतमायाय' इति मथुरावतारेण

विशेष्यते ।

निरुक्ति-

यस्मिन् वसन्ति भूतानि भूतावासः स कथ्यते ।
वसुदेवापत्यतया द्वादशाध्यात्ममन्जसा ।
नियच्छति सदा यस्तु वासुदेवः स ईरितः ।।

सर्वासुनिलयो;- ओं सर्वासुनिलयाय नमः

नलः - ओं अनलाय नमः

सर्वं सर्वप्राणालम्बनम् "सर्वासुनिलयः" यथा-
"बिना कृष्णेन गोव्रजाः"
"असूर्यमिव सूर्येण निवातमिव वायुना ।
कृष्णेन समुपेतेन जहृषे भारतं पुरम्"[1] इत्यादि ।

तेषामेव सर्वकर्मकरत्वेऽपि अनलः"
न किंचित् कृतमेणा मयेत्यवितृप्तः,
"ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति"[2] इति ।

---

१- भा०सं०३३।१५
२- भा०उ० २८।२२

निरुक्ति-

सर्वासुनिलय स्स स्यात् सर्वप्राणावलम्बनम् ।
सर्वं कृत्वापि गोपानां किंचिन्मया कृतम् ।
इत्येवमवितृप्तो यो नलः परिकीर्तितः ।
स्वभक्तेभ्यः कृतं मन्तुं नालं सोढुं स वा नलः ॥

दर्पहा - ओंदर्पघ्ने नमः

दर्पदो - ओं दर्पदाय नमः

गोवर्धनोद्धरणपारिजातापहरणबालदोर्दण्डखण्डनादौ देवानां दर्पमात्रं हृतवान् इति दर्पहा ।

शत्रुशमनदुर्जयद्वारकावतीकरणशङ्खसप्तनिधिसुरतरुसुधर्माहरणादिना निर्भरी कृतेभ्यो यादवेभ्यो मधुपानादि दर्पं दत्तवान् इति दर्पदः ॥

निरुक्ति-

गोवर्धनस्योद्धरणे पारिजातपरिग्रहे ।
बालदोर्दण्डखण्डानां खण्डनादौ तदा तदा ।
देवानां वै दर्पमात्रं हृतवान् यस्स दर्पहा ॥
मथुरायां यादवेभ्यो मधुपानादिना ततः ।
दर्पञ्च दत्तवान् यो सौ दर्पदः परिकीर्तितः ॥

दृप्तो - ओं अदृप्ताय नमः

दुर्धरो - ओं दुर्धराय नमः

अथापि स्वयम् अदृप्तः, सभापर्वणि,

"एवं विधानि कर्माणि कृत्वा गरुडवाहनः ।
न विस्मयमुपागच्छन् पारमेष्ठ्येन तेजसा"[1] इति

यशोदानन्दलालन दृप्तः, वा ।

बाललीलादिप्रसङ्गेषु मत्तमाचङ्व्वत् ताभ्यां दुर्धरः, दुवार-
चन्वलवेष्टितः इति यथा साह-

"यदि शक्नोषि गच्छ त्वमतिचन्वलवेष्टितः"[2] इति ।

दुरात्मना वा दुर्धरः, यथा-

दुर्ग्रहः पाणिना वायुः दुस्पर्शः पाणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना दुर्ग्रहः केशवो बलात्[3]

निरुक्ति-

अथाप्यगर्वितो यो सौ अदृप्तः स उदाहृतः ।
बाललीलाप्रसङ्गेषु यशोदानन्दलालनात् ।
दृप्तो मत्तो भवेत्ताभ्यां दुर्ग्रहो दुर्धरो मतः ।।

---

१- भा०स०५३।२८
२- वि०पु० ५।६।१५
३- भा०उ० १२८-४०

था पराजित: - ओं अपराजिताय नम:

अथ भारतसंग्रामे, निष्परिग्रहा अपि तत्परिग्रहात् पन्चापि पाण्डवा:, शतेनापि बहुप्रकारणरुद्धमूलैर्धार्तराष्ट्रैर्न पराजिता इति, अपराजित:,

"अजय: शाश्वतो ध्रुव:"[1]

"अजित: खड्गधृक्"[2]

"यत: कृष्णस्ततो जय:"[3]

"यत्र योगेश्वर: कृष्ण:"[4] इत्यादि

आयुर्वेदे चरके ओषधपेषणमन्त्रे -

"यथाहं नाभिजानामि वासुदेवे पराजयम् ।
मातुश्च पाणिग्रहणं समुद्रस्य च शोषणम् ।।

एतेन सत्यवाक्येन सिध्यतामगदो ह्ययम्" आयुर्वेदे । वैतरणो च विषहरणमन्त्रं वदन् -

"रत्नाकर इवाक्षोभ्यो हिमवानिव चाचल: ।
जातवेदा इवाधृष्यो नारायण इवाजय:" इति वैतरणो ।

निरुक्ति

दुर्योधनादिभिर्नित्यं रुद्धमूलै: पराजय: ।
न यस्य्कृत्रचिद्यापि सो पराजित ईरित: ।।

---

१-रा०युं० ११४-१५

२- रा०यु० १२०-१४

३-मा०उ० ६।७६

४-गीता १८।७८

विश्वमूर्तिर् - ओं विश्वमूर्तये नमः

कथं दुर्बलान् बलवन्तो न जयन्ति, सर्वस्य तच्छरीरत्वात् नहि स्वशरीरम् स्वानिष्टे चेष्टते इदमभिप्रेत्याह-

विश्वमूर्तिः, यथा-

"अहमात्मा गुडाकेश सर्वभूताशयस्थितः"[1] इति

निरुक्ति-

विश्वं मूर्तिस्तनुर्यस्य विश्वमूर्तिस्तु स स्मृतः ।

महामूर्तिर् - ओं महामूर्तये नमः

दीप्तमूर्तिर्- ओं दीप्तमूर्तये नमः

विश्वाश्रयमूर्तिः, महामूर्तिः यथा- इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम् । मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ।[2] इति

यत् किंचित् मूर्तिकेनचित् गुणेन दीप्तं तदस्य विशेषेण मूर्तिरिति दीप्तमूर्तिः, यथा-

"यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा"[3]

---

१-गीता १०।२०

२- गीता ११।७

३- गीता १०।४१

निरुक्ति-

विश्वैकाश्रयमूर्तित्वान्महामूर्तिरिति स्मृत: ।
यत्किंचित्क्वचिद्दीप्तं गुणेनात्र विशेषत: ।।
तत्सर्वं मूर्तिरस्येति दीप्तमूर्तिरसौ स्मृत:।।

अमूर्तिमान् -ॐ अमूर्तिमते नम:

अमूर्तय:, अव्यक्तपुरुषादयोऽप्येवमस्य स्वमिति अमूर्तिमान्,
यथा- "भूमिरापोऽनलो वायु:"[1]
"अपरेयमितस्त्वन्यां प्रकृतिम्"[2] इति
"यस्याव्यक्तं शरीरम्"[3]
"यस्यात्मा शरीरम्" इति च शतपथब्राह्मणे
पूर्वोक्तमूर्तिमत्त्वोक्तिविरोधात् अमूर्तिरित्येतावता
निर्णयसिद्धौ मतुब्वैयर्थ्याद्वर्णेन मूर्तिनिर्णय: ।

निरुक्ति-

अमूर्तिशब्देनोच्यन्ते ह्यव्यक्तपुरुषादय:।
त एव यस्य स्वमिति स स्मृत: स्यादमूर्तिमान् ।।

---

१- गीता ७।४
२- गीता ७।५
३- सु०उ० ७

अनेकमूर्तिर् - ओं अनेकमूर्तये नमः

अव्यक्तः - ओं अव्यक्ताय नमः

कृष्णत्वेऽप्यजहद्वासुदेवादिचतुर्मूर्तित्वात् -

"षोडश स्त्रीसहस्राणि शतमेकं ततोऽधिकम् ।[1]
तावन्ति चक्रे रूपाणि भगवान् देवकीसुतः, इति

असाधारणानेकमूर्तित्वात् अनेकमूर्तिः ।
इदं मनुष्यत्वेन गूहत इति अव्यक्तः, यथा-

"नाहं प्रकाशस्सर्वस्य"[2]

"नाहं वेदैर्न तपसा"[3] इत्यादि

षोडश स्त्री सहस्राणि शतमेकं ततोऽधिकम् ।
अनेकमूर्ति रित्युक्तः तत्सङ्ख्यादेहधारणात् ॥
मनुष्यत्वेन सर्वत्र परभावाप्रकाशनात् ।
बुधैरव्यक्त इति च कथितस्तत्त्वपारगैः ॥

शतमूर्तिश् - ओं शतमूर्तये नमः

शताननः - ओं शताननाय नमः

अथ दिदृक्षवे अर्जुनाय व्यक्तवैश्वरूप्यः, शतमूर्तिः,
पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः" इति ।

---

१- वि०पु० ५।३२-१८
२- गीता ७।२५
३- गीता ११।५३

शतानन, तत्रैव अर्जुन:।

"अनेकवक्त्रनयनम्" [1] इति

निरुक्ति-

अर्जुनाय व्यक्ततया विश्वरूपप्रदर्शनात् ।
शतमूर्तिरिति ख्यात: शतशो थ सहस्रश: ।
अनेकाननसंपत्त्या शतानन इतीरित: ।

एको - ओं एकाय नम:

उक्ते महिम्नि सजातीयसंख्येयासंभवात् अद्वैतं गच्छतीति एक: ।
"इण् गतौ" इत्यस्मात् "इण्भीका०" इत्यादिना कन्प्रत्यय: ।
एकोपाधिपतितान् हि सन्चष्टे, यथा द्वौ ब्राह्मणौ त्रय: क्षत्रिया:, इति ।

नहि भगवत: कश्चित् केनचिदुपाधिना तुल्यकक्ष्य:, यथा-
एक:रुद्राजा जातो बभूव [2]
"न तस्य प्रतिमास्ति" इति च

निरुक्ति-

द्वितीयस्वसजातीयराहित्यादेक उच्यते" ।

---

१- गीता ११।१०
२- का० १-३२

नैक: - ओं नैकाय नम:

स: - ओं साय नम:

अत इदमैक्यं न सर्वनिह्नवनिवर्तसंस्कारणपरिणामादिनिमित्तम्, किन्तु विभूतितया विजातीयेन सर्वेण द्वितीयवानेव इति -

नैक:, यथा-

"नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप:, इति[1]

एष्वाकुमारम् अखिलप्रसिद्ध्या स्वविषयं ज्ञानं स्यतीति स:, स्यते:,

"शमिमुण्विस्यति०" इत्यादिना प्रत्यय: ,यथा-

निरुक्ति-

नैक: स्वव्यापारतया विभूतीनामितीरित: ।

सर्वेषु कृष्णारूपेषु आकुमारप्रसिद्धित: ।

ज्ञानं हि यस्य विषयं स्यत्यसौ स इतीरित: ।।

व: - ओं वाय नम:

निरुक्तात् स्वावासस्त्वयम् यथाप्रसिद्धिसर्वत्र वसतीति व: वसते: ड: ।

"वसन्ति तत्रभूतानि भूतात्मन्यखिलात्मनि ।

स च भूतेष्वशेषेषु वकारार्थस्ततो मुने इति ।

---

१- गीता १०।४०

निरुक्ति-

यथाप्रसिद्धिवासित्वात् तस्यापि वसतेश्च सः ।

भूतावासतया वः स्यात्

कः - काय नमः

किम् - ओं किमे नमः

मलीमसेष्वेषु वसन्नपि कनति दीव्यत् इति कः ।

कनतेर्डः

'कनी, दीप्तिकान्तिगतिषु' धातु प्राग्वदेव डः टिलोपश्च

निरुक्ति-

सर्वेषु कनतीति कः ।

तत्त्वं सर्वैप्सितबुभुत्सूनां निरसाधिप्रष्टव्यत्वात् किम् ।

'प्रच्छज्ञीप्सायाम्' इत्यस्मात् धातुः

'प्रच्छिर्दसि' इत्यादिना

इम् प्रत्ययः कादेशश्च ¹

'सोन्वेष्टव्यः स विजिज्ञासितव्यः'

निरुक्ति-

य ईप्सितार्थप्राप्त्यर्थं प्रष्टव्यः किं इति स्मृतः'

१- छा०उ० ८।७।१

यत् - ओं यते नमः

रक्षार्थं यतते इति यत्

"यति प्रयत्ने" क्विप् यथा,

"कृष्ण कृष्णेति कृष्णेति यो मां स्मरति नित्यशः
जलं भित्वा यथा पद्मं नरकादुद्धराम्यहम्" इति ।

निरुक्ति-

"रक्षार्थं प्रपन्नानां स यतते (यद्) इति स्मृतः"

तत् - ओं तते नमः

स्वज्ञानभक्तिं तनोतीति तत्

"गमादीनाम्"[1] इति क्विप् नकारलोपः तुगागमश्च वतोंहि
"ओम तत् सत् इति निर्देशः"[2]

पदमनुत्तमम्-ओं पदायानुत्तमायनमः

तेषां परमप्राप्यत्वात् पदमनुत्तमम् ।
पद्यते प्राप्यते इति पदम्

निरुक्ति-

परमं यत्प्रपन्नानां प्राप्यं पदमनुत्तमम् ।

---

१- पा०अ० ६।४।४०

२- गीता १७।२३

ओँ लोकबन्धवे नमः

एवमविशेषेणाशेषानुग्रहे अवर्जनीयं बान्धवं निबन्धनमाह-

लोकबन्धुः

लोकानां स्वजनः

"बन्ध,बन्धने" धातु क्र्यादिः

"शृस्वृस्निहि" इत्यादिना उ प्रत्ययः यथा

माता पिता भ्राता निवासश्शरणं सुहृत गतिर्नारायणः[1]

"पिता महस्य जगतः इत्यादि[2]

निरुक्ति-

लोकानां स्वजनत्वादि लोकबन्धु रिति स्मृतः ।

लोकनाथो -ओँ लोकनाथाय नमः

माधवो - ओँ माधवाय नमः

तन्मूलसाधारणं स्वाभाविकं च सबन्धमाह लोकनाथः इति स्वामी ।

बान्धवविशेषमाह मातापितृत्वम् श्रिया सहास्य सूचयति

माधवः मधुकुलोद्भवत्वाद्वा- माधवः ।

"मौनाद्ध्यानाच्च योगाच्चविद्धि भारतमाधवम्"[3]

निरुक्ति-

लोकनाथत्वसंबन्धः श्रीमतेश्चेति माधवः ।

मावांवंशोद्भवत्वाच्च माधवः परिकीर्तितः ।।

---

१- सु०उ०६

२- गीता ९।१७



३- ... १४।१४

<u>सुवर्णवर्णो</u> - ओं सुवर्णवर्णाय नमः

उक्तगुणवत् कनकनिकषनिर्दोषोज्ज्वलदिव्यवर्णतया सुवर्णस्य हिरण्यस्येव वर्णो रूपगुणो यस्येति सुवर्णवर्णः ।

"यदा पश्यः पश्यते रुक्मवर्णम्"[1]

"आदित्यवर्णम्"[2]

"हिरण्मयः पुरुषः सर्व एव सुवर्णः"[3]

इत्यादि वर्णाधिष्ठानं च"

<u>हेमाङ्गो</u> - ओं हेमाङ्गाय नमः

<u>वराङ्गश्</u> - ओं वराङ्गायनमः

<u>चन्दनाङ्गदी</u>

नित्यं दिव्यं सत्त्वमयमङ्गमस्येति हेमाङ्गः ।

वरम् दैवदया व्रियमाणम् अङ्गमुपनिषदम् अनिह्नुतदिव्य

चिह्नमाविष्कृतम् रूपमस्येति वराङ्गः यथा -

"फुल्लेन्दीवरपत्राभं चतुर्बाहुं निरीक्ष्य तम्[4] ।

श्रीवत्सवक्षसं जातं तुष्टावानकदुन्दुभिः" इति

---

१- मु०उ० ३-३

२- पु०सू० २०

३- छा०उ० ४।६।६

४- वि०पु० ५।३।८

निरुक्ति-

वर्णाश्रयं तु यस्याङ्गं दिव्यसत्त्वमयं यत:
अतो हेमाङ्ग इत्युक्त: सप्ताणां हेमवर्णद: ।।
देवकीप्रीतये गुप्त दिव्यलाञ्छमङ्गलम् ।
आविष्कृतं स्वतो येन वराङ्ग स तु कथ्यते ।।

वीरहा - ओं वीरघ्ने नम:

विषम: - ओं विषमाय नम:

शून्यो - ओंशून्याय नम:

अतिमुग्धस्तनन्धयोऽपि वीरान् वन्चकान् पूतनाशकटार्जुनादीन्
सुरादीन् समूलघातं हन्तीति वीरहा ।
ऋजुकुटिलाशयेषु दौर्मकरमयंकरवृत्तया विषम: समो नेति -
विषम: ।
मनुष्यत्वेऽपि अशेषदोषैर्विवर्जित: शून्य: ।
'शुन गतौ' 'व्यत्' धातु:

निरुक्ति-

समूलं पूतनादीन्वै यो जघान स वीरहा ।
शून्य: स्यात् दोषवर्जित: ।

घृताशीर - ओं घृताशिये नम:

अचल: - ओं अचलाय नम:

चल: - ओं चलाय नम:
'घृ सेचने'

घृतं सेचनं स्वगुणैः जगदाप्यायनम् तत्र वा गोपगृहगव्ये वा आशास्तिरस्येति घृताशीः ।

दुर्योधनादिभिः दुरात्मभिरमेध्यः अचलः ।

निरुक्ति-

गोपानां सद्नगव्ये वा जगदाप्यायनेन वा
घृतेत्वाशा हि यस्यास्ति घृताशीः परिकीर्तितः
दुर्योधनाधर्मेवत्वात् अचलः परिकीर्तितः ।।

अमानी - ओं अमानिने नमः

दूत्याधिकारादौ अनपत्रपिष्णुत्वप्रयोजिकाया भक्तेष्वनहं युतया मानः चित्तसमुन्नतिः अस्यास्तीति सः अस्य नास्तीति अमानी)

"मान पूजायाम्" धातु चुरादि भावे घञ् ततः
"मत्वर्थीयेत इनिः" (यस्य०" इति लोपः
नञो नस्य लोपः इन्नन्तदीर्घः इत्यादि ।

निरुक्ति-

यो नहंकारी भक्तेष्वेव स ईरितः अमानी"

---

१- पा०अ० ६।४।१४

मानदो - ओं मानदाय नमः

मान्यो - ओं मान्याय नमः

अर्जुनोग्रसेनयुधिष्ठिरादिभ्यः रथित्वाधिराज्यबहुमानं दत्वान मानदः ।

तदीयत्वेन सम्मन्तव्यः मान्यः ।

निरुक्ति-

मानदोऽर्जुनादिभ्यो मानं राज्यं च दत्वान् ।
मान्यस्तदीयत्वेन स्यात् सम्मन्तव्यस्सदैव सः ।।

लोकस्वामी - ओं लोकस्वामिने नमः

त्रिलोकधृत् - ओं त्रिलोकधृते नमः

लोकानामशेषाणाम् स्वशेषाणाम्भुवनानाम् स्वामी निरुपाधिकशेषीति लोकस्वामी ।

एवमतितुङ्गः कथं नीचैर्भवति यतः त्रिलोकधृत् ।

निरुक्ति-

लोकभर्तृतया चैव लोकस्वामीति शब्द्यते ।
लोकत्रयस्य धरणात् स त्रिलोकधृग् ईरितः ।

मेघजो - ओं मेघजाय नमः

धन्यः -ओं धन्याय नमः

अतो सैवे देवकिपुत्रीयव्रतरुपे यज्ञे जात इति मेघजः सहि तामाह-

"स्तुतोऽहं यत्त्वया पूर्वं पुत्रार्थिन्या तदम्ब ते ।
सफलं देवि जातोऽहं यत्त्वोदरात्" ।।[1]

तज्जन्मधनलाभात् धान्य:
"धनगणं लब्ध्वा"[2] इति यत्
"अहं वो बान्धवो जात:"[3] इति

सत्यमेधा – ओं सत्यमेधसे नम:

धराधर: – ओं धराधराय नम:

तेजोवृणो – ओं तेजोवृणाय नम:

तथा सत्या नटनमात्रत्वभावादवितथा मेधा बल्लववसुदेवादिसाजात्याभिमानिनी बुद्धि: यस्येतिसत्यमेधा: ।
गोवर्धनं यस्मादधात् – धराधर: ।
एवं सुहृत्पालनलक्षणं तेजो वृणतीति –तेजोवृण: ।

निरुक्ति-

धरं गोवर्धनं शीघ्रं कृतवान् स धराधर: ।
तेजोभिवर्णति यत: सुहृत्पालनलक्षणम् ।
तेजोवृण: समाख्यातो वरवर्णोभिरवृद्धिद: ।।

---

१-विo्पुo ५।३।१४
२- पाoञo ४।४।८४
३- विoपुo ५।१३।११

द्युतिधरः -ओं द्युतिधराय नमः

सर्वशस्त्रभृतां वरः- ओं सर्वशस्त्रभृतां वराय नमः

एतेन तारुण्येपि इन्द्राभिभावुकामतिमानुषीं द्युतिं धृतवान् द्युतिधरः ।

नरकजरासन्धादिसमरेषु दिव्यनेकास्त्रमोचनात् सर्वशस्त्रभृतां सर्वास्त्रिणाम् वरः श्रेष्ठ इति - सर्वशस्त्रभृतांवरः ।

प्रग्रहो - ओं प्रग्रहायनमः

निग्रहो - ओं निग्रहाय नमः

व्यग्रो - ओं व्यग्राय नमः

अर्जुनः रश्मिनिभिर्वि प्रगृह्यते प्रकर्षेण गृह्यते सारथिनानेनेति प्रग्रहः ।

"ग्रह उपादाने" क्र्यादिः प्रपूर्वः ।

"अकर्तरि च कारके"[1] इत्यनुवृत्तौ ।

"ग्रहवृहनिश्चिगमश्च"[2] इति करणार्थे अप् प्रपूर्वो बहुव्रीहिः

अर्जुनपौरुषनिरपेक्षेण सारथ्यवैचित्र्येण निगृह्यन्ते शत्रव इति -निग्रहः ।

अर्जुणवैरिनिग्रहे अर्जुनयुद्धक्रमासिहमानः तत्र व्यग्रः ।

"युद्धक्रमासहिष्णुत्वात् पार्थविद्विडिनिग्रहे ।

योसौ व्यग्रः समाख्यातः षडर्णो वैरिनाशकः ।।

---

१- पा०अ० ३।३।१९

२- पा०अ० ३।३।५८

नैकशृङ्गो - ओं नैकशृङ्गाय नमः

बुद्धियोग्यसारथ्यनामायुधग्रहण व्याजः प्राप्तकाले: तद्ग्रहणमिति बहुवैरिबाधकमस्येति नैकशृङ्गः ।

"शृ, हिंसायाम्" धातुः क्यादिः

"शृणातिर्ह्रस्वश्च" उणादि इति गन् प्रत्ययः किन्नुगामश्च

निरुक्ति-

यस्यस्यान्नैकशृङ्गः सः बहुशोवैरिबाधकम्"

गदाग्रजः-ओं गदाग्रजाय नमः

गदनाम्नो ग्रजः -गदाग्रजः ।

चतुर्मूर्तिः - ओं चतुर्मूर्तये नमः

चतुर्बाहुः -ओं चतुर्बाहवे नमः

चतुर्व्यूहः - ओं चतुर्व्यूहाय नमः

अथ विभवेपि तन्मूलभूतो व्यूहः प्रत्यभिज्ञाप्यते यदुकुलेपि बलभद्रवासुदेव प्रद्युम्नानिरुद्धाख्याश्चतस्रो मूर्तयो यस्येति - चतुर्मूर्तिः

व्यूहमूलेन निरुपाधिकपररुपेण देवक्यामवततारेति चतुर्बाहुः सा ह्येनमाह ।

उपसंहर सर्वात्मन् रुपमेतच्चतुर्भुजम् ।
जानातु मावातारन्ते कंसोयंदितिजन्मजः[1] ।

---

1- वि०पु० ५।३।१३

अत्रापि तथैव समस्तव्यस्तषाड्गुण्यव्यवस्थत्वात्-चतुर्व्यूहः ।

उपासकाभियोगतारतम्यकृतक्रमाच्चतस्रः प्राप्त -योऽस्मिन् इति चतुरगति ।

निरुक्ति-

चतस्रः प्राप्तयो यस्मिन् भक्तानां स चतुर्गतिः ।

चतुरात्मा -

पूर्ववत् ।

चतुर्भावश् - ओं चतुर्भावाय नमः

चतुर्वेदवित् - ओं चतुर्वेदविदे नमः

एवं षाड्गुण्यात्मकचतुर्व्यूहाधिकृतजगद्व्यापाराशास्त्रप्रदानादि स्थूलसूक्ष्मप्रयोजनपुञ्जाभिव्यञ्जनात्, चत्वारः उक्त चतुर्व्यूहप्रभावाः भावाः भवनाः प्रयोजनाभिव्यञ्जनानि अस्येति - चतुर्भावः ।

व्यूहविभवयो विभावितमिदं महावैभवम् महाविभूति महार्णवलक्षमात्रम् परापरविभवको विदानां चतुर्वेदविदां प्रतिभातीति चतुर्वेदवित् ।

समावर्ती- ओं समावर्तीय नमः

निवृत्तात्मा - ओं निवृत्तात्मने नमः

दुर्जयो - ओं दुर्जयाय नमः

एतादृशं सदा सर्वत्रसर्वदा समन्ताद्व्यूहवैभवावर्तनामस्येति समावर्तः ।

कृपालुतया एष जगत्संवलितोऽधिकार: स्वस्तुतदसम्मतमाना:

निवृतात्मा यथा-

"अवाक्यनादर:"[1]

सुरनरादिशक्त्या दुश्शक्यवशीकरणतया जेतुमशक्य इति-दुर्जय:

निरुक्ति-

निवृतात्मा मनो यस्य सदा जगदमिश्रितम् ।
शक्त्या देवमनुष्याद्यैर्वशीकर्तुं न शक्यते ।
अन्वेष्टुं वापि य: सस्यात् दुर्जय: सप्तवर्णक: ।।

दुरतिक्रम: - ओं दुरतिक्रमाय नम:

दुर्लभो - ओं दुर्लभाय नम:

दुर्गमो - ओं दुर्गमाय नम:

सर्वेषामपि स्वपादमूलमतिक्रम्य गत्यन्तरविरहात् तै:
अतिक्रमितुमशक्य इति - दुरतिक्रम: ।

"क्रमु, पादविक्षेपे"
अतिपूर्व: दुस्युपपदे पूर्ववत् खल् सोरुत्त्वम् एवमुत्तरत्राप्युभयत्र ।
अतिपूर्व: दुस्युपपदे पूर्ववत् खल् सोरुत्त्वम् एवमुत्तरत्राप्युभयत्र । लब्धुं प्राप्तुमशक्य इति दुर्लभ: ।
तथान्यमनस्क: अजितेन्द्रियै: लब्धुं प्राप्तुमशक्य इति दुर्लभ: ।
"डुलभष् प्राप्तौ"
दुसि पूर्ववत् खल् वन्यन्वेत्युच्यते
नेत्रदुर्बलानामिव मध्याह्नभास्कर: वपृष्यतेजा: दण्डापूपिकया
दुर्गम: ।

1- वा०रा० 3।14

निरुक्ति-

अजितेन्द्रियदुष्प्रापो दुर्लभ:स च कथ्यते ।
नेत्रदुर्बलवृत्तीनां मध्याह्नद्युमणिर्यथा ।
प्राप्तिदुष्करतेजस्त्वात् दुर्गम: परिकीर्तित: ॥

दुर्गो -ओं दुर्गाय नम:

दुरावासो - ओं दुरावासाय नम:

दुरारिहा - ओं दुरारिघ्ने नम:

अविद्यावरणैर्दुष्प्रवेशश्च दुर्ग:
"सुदुरोरधिकरणे"[1] इति ड ।एवं दूरे दुष्कर: तत्पदावास: इति

दुरावास: ।
इदं दौर्लभ्यम् अपिरत्नुपायविषये प्रपञ्चन् बुद्धावतारं नियच्छति-

दुरारिहा ।
दुर्मार्गगामिनो दुरारिण: तान् त्रयीमार्गत्याजनादिभिस्तैस्तै-

रुपायैर्हतवान् इति यथा वैष्णवे ।
"हताश्च ते दुरा दैवैस्सन्मार्गपरिपन्थिन:[2] ।

निरुक्ति-

कुप्रवेशतयादुर्ग: पापिभिस्तु कदाचन
दुरारिणस्तु दुर्मार्गगामिनस्तान्निहन्ति य: ।
त्रयीमार्गत्याजनाद्यैस्स्यान्नित्यं दुरारिहा ।

---

१- पा०अ० ३।२।४८
२- वि०पु० ३।१८।३४

शुभाङ्गो - ओं शुभाङ्गाय नमः

लोकसारङ्गः -ओं लोकसारङ्गाय नमः

सुतन्तुः - ओं सुतन्तवे नमः

कथं ताननुप्रविष्टः तत्रोच्यते असुरविप्रलम्भनमायामोहनविग्रहतया शुभमङ्गमस्येतिशुभाङ्गः ।

कीदृक् विप्रलम्भः लोकसारङ्गः ।

लोके यत् सारं न्यायादनपेतं भोगमोक्षावर्त्म

"तद्गच्छति"

"गमेस्सुप्युपसंख्यानम्"[1]

"सञ्च वा" इति सत्वाह

"कुरुध्वं मम वाक्यानि यदि मुक्तिमभीप्सथ"[2]

शोभनो न प्रतिलङ्घ्यस्तद्ग्रहणवागुरातन्तुः कृत्रिमशान्तिभावनादिरूपो स्येति सुतन्तुः ।

निरुक्ति-

न्यायानपेतं यत्सारं भोगनिर्वाणवर्त्मच ।

लोके तद्गच्छति सदा लोकसारङ्गः ईरितः ।।

तन्तुः कृत्रिमशान्त्यादिरूपस्तद्ग्रहणाय वै ।

सुतन्तु शोभनोस्येति सप्ताणादीणनाशकः ।।

---

१- पा०वा० ३।२।३८

२- वि०पु० ३।१८।५

इन्द्रकर्मा-ओं इन्द्रकर्मणे नमः

महाकर्मा- ओं महाकर्मणे नमः

कृतकर्मा- ओं कृतकर्मणे नमः

कृतागमः - ओं कृतागमायनमः

एवम् शरणागतेन्द्रार्थं एवं विषयव्यापारतया इन्द्राय तत्प्राधान्येन तद्व्यपदेशात् तत्प्रभृतिभ्यो देवेभ्यः कर्म एतादृशव्यापारोस्येति इन्द्रकर्मा ।

एवंप्रपन्नपरिपालनार्थत्वाद्दुराचारदण्डनार्थत्वाच्च खलु परमकारुणिकस्यैव विप्रलम्भसंभवः एवं न्यायवृत्त्वात् महाकर्मा ।

तल्लिप्रलिप्सया स्वयमप्यनुष्ठिततदाचारः कृतकर्मा

तत्स्थेम्ने प्रणीतबुद्धार्हता दिशामथिकागमः कृतागमः ।

निरुक्ति-

प्रपन्नेन्द्रार्थतया दैत्यसंहाररूपकम् ।
कर्म यस्यास्तौ(न्द्रकर्मा)ह्यष्टाणां मनुरुत्तमः ॥
स्वानुष्ठिततदाचारः कृतकर्मेति कथ्यते ।
कृतबुद्धाद्यागमत्वात् कृतागम उदाहृतः ॥

उद्भवस् - ओं उद्भवाय नमः

सुन्दरम् - ओं सुन्दरायनमः

सुन्दो -ओं सुन्दाय नमः

रत्ननाभः - ओं रत्ननाभाय नमः

मुक्त्युपदेशनाटितकेन उद्गतः इव भवादिति वा उद्भवः ।
तद्दृष्टिमनोहरतया च सुन्दरः रमणीय इति सुन्दरः ।

तेन च सौन्दर्येण असुरमनांसि सुष्ठु -सुतराम् उनत्ति क्लेदयति-
आर्द्रयति सुन्दः ।

पाण्डित्य विडम्बनमृष्टोदरव्यक्तरम्यनाभितया, रत्नम् तद्वत्
रम्या नाभिरस्येति रत्ननाभः ।

<u>सुलोचनः</u> - ओं सुलोचनाय नमः

तथा हृदयाह्लादरलोचनतया सु-शोभने लोचने यस्येति सुलोचनः ।
'लोचृ दर्शने' करणे ल्युट् अनः सुपर्वो बहुव्रीहिः ।

'ततो दिगम्बरो मुण्डः'[1]

<u>निरुक्ति-</u>

सुलोचन इति प्रोक्तो हङ्मायामोहितेक्षणः'

---

१- विष्णुपु० ३।१८।२

अर्का - ओंअर्काय नमः

अहो महात्मा अतिधार्मिक इति तैः स्तुतः (अर्कः)

"अर्क, स्तुतौ"

निरुक्ति-

अत्यन्तधार्मिक इति स्तुतस्तैः र्का ईरितः"

वाजसनिः - ओं वाजसनये नमः

शृङ्गी - ओं शृङ्गिणे नमः

नास्तिक्यवादेन ऐहिकमन्नादिकमेव संभजतीति - वाजसनिः

वन- षण संभक्तौ" इन्

"सर्वधातुभ्यः" उणादि दापणवक्तं हीदम्, यत् प्रातः

प्रातः दध्योदनकवलान् गृह्नत् इति ।

शृङ्गमिव अहिंसा विडम्बनपिच्छिका अस्य करे अस्तीति शृङ्गी ।

निरुक्ति-

अन्नादीनैहिकानेव यस्मान्मह्यां भजन्ति हि ।

स वाजसनि रित्युक्तः वस्वणो न्नप्रदो मनुः ।

करेऽस्ति पिच्छिका यस्य शृङ्गय हिंसाविडम्बनात् ।

सर्वप्रपञ्चमिथ्यात्वसंविदात्मत्ववादनः ।

जयन्तम् - ओं जयन्ताय नमः

सर्वविज्जयी - ओं सर्वविज्जयिने नमः

सुवर्णविन्दुः -ओं सुवर्णविन्दवे नमः

आस्तिक्यवादिनः संविदात्मत्वप्रपन्चमिथ्यात्वमिथ्यावादैर्जित-
वान् - जयन्तः ।

"जि जये" धातुः

तृमूवहिवसिभासिसाधिगडिमण्डि" उणादि इति झच् प्रत्ययः
कथं चैतान् प्रमाणविरुद्धं प्रत्याययति तत्रोच्यते यतस्सर्वज्ञानामप्येतज्जय्य-
तया अयम्, सर्वविदः सर्वज्ञान् तेषां जेतुं शीलमस्येति सर्वविज्जयी ।

निरुक्ति-

आस्तिक्यवादिनां जेता जयन्त इति कथ्यते ।
यस्य जय्याश्च सर्वज्ञाः स चोक्तः सर्वविज्जयी ।
सर्वशक्तित्वात् पटुतरपदकवर्णैरास्तिकतापलापात् - सुवर्णविन्दुः

सर्ववागीश्वरेश्वरः

वादित्ववाग्मित्वपारीणतया सर्वेषाम् - वागीश्वराणाम्
वाचः वाण्याः ईश्वरः ब्रह्मा बहुवचनादाद्यर्थलाभात् ब्रह्मादीनामपि
ईश्वरः स्वामीति- सर्ववागीश्वरेश्वरः ।

निरुक्ति-

वादिवाग्मित्वयोः पारं यो गच्छति स विश्रुतः ।
ख्यणाँ वाक्प्रद इति सर्ववागीश्वरेश्वरः ॥

महागर्तो

महाभूतो

महानिधि

एवम् बाह्यकुदृष्टिविनिष्टतया नष्टात्मनाम महान्तः-गर्ताः अवटाः तदुपलक्ष्याः रौरवादयो अस्मादिति महागर्तः ।

अश्रद्दधानाः पुरुषाः धर्मस्यास्य परंतप ।[1]
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ।।

इत्थम् स्वशासनातिलङ्घिनाम् असुराणाम् निग्राहकत्वमुक्तम्, अथ दैवीं संपदमभिजातानां स्वशास्त्रवश्यानाम् अनुग्राहकत्वमभिधीयते- महान्तः महात्मानः भूताः- स्वभूता अस्येति - महाभूतः ।

तथा ते महान्तो निधयः तद्ददतिप्रिया अस्येति महानिधिः ।

कुमुदः - ओं कुमुदाय नमः

कुन्दरः- ओं कुन्दराय नमः

कुन्दः- ओं कुन्दाय नमः

कौ प्रकृतिमण्डल एव तंस्सह मोदत इति कुमुदः ।

कुं मुक्तिभुवं ददातीति वा-

---

१-गीता ९।३

कुन्दकुसुमवद्वैमल्याद्वा कुन्दम् परतत्वज्ञानम् पृषोदरादि: तद्दाति ददातीति कुन्दर: ।

स्वयं कुञ्चितपूर्वपूर्वज्ञानवैराग्यादिभूमिकेभ्य: उत्तरोत्तरां परमक्ति-परज्ञानादिभुवम् ददातीति वा कुम् विदारितम् पापम् दायति शोधयतीति वा- कुन्द: ।

पर्जन्य:

अर्ज अर्दने पर्जन्य इति अन्यप्रत्यय: पजादेशश्च निपात्यते स्वतत्त्वज्ञापनेन त्रितापापह: - पर्जन्य: ।

पावनो -ओं पावनाय नम:

निल:- ओं अनिलाय नम:

अमृताशो - ओं अमृताशाय नम:

अमृतवपुस् -

तथा च पवते गच्छतीति- पवन: ।

'पवि गत्यार्थ:'

तदनुग्रहे प्रेरक निरपेक्षत्वात् अनिल: ।

"इल्" प्रेरणे प्रेरयतीति इल: [1]

" इगुपधात् क: "

---

१- पा०अ० ३।१।१३५

सोऽस्य नास्ति इति यथा

"तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः" इति

तानमृतं स्वगुणामृतम् आशयति भोजयतीति- अमृताशः ।

अमृतं तद्वचैम्य: स्वदमानं वपुः रूपमस्येति -अमृतवपुः ।

तेषां शक्याशक्यसाध्यासाध्यादिकमनुसन्धत्त इति सर्वज्ञः ।

निरुक्ति-

स्वस्य स्वस्मात् प्रेरकोऽन्यः प्रपन्नानुग्रहे सदा ।

नास्तीति सो निलः प्रोक्तो मुन्यणोमिनुरुत्तमः ।

यश्चाशयति भक्तान्वैं स्वगुणामृतमादरात्

अमृताशः स इत्युक्तः श्रुतपीयूषदो मनुः ।

वपुर्यस्यामृतमिति स चामृतवपुः स्मृतः ।

सुलभः - ओं सुलभाय नमः

सुव्रतः - ओं सुव्रताय नमः

सिद्धः - ओं सिद्धाय नमः

अतस्स्वयमनर्घोऽपि नैवक्रादिना रागादिमूल्यमात्रेन स्वाधीनीकरणा-

त् लब्धुं शक्य इति सुलभः ।

लभेस्स्वावोष दित्यादिना खल् नुम प्रतिषेधश्च प्रागेवोक्तः यथा-

"वस्त्रे प्रगृह्य गोविन्दं मम गेहं व्रजेति वै" इति

यथा कथंचित् प्रविष्टानां सर्वथा परिपालनहठव्रतः - सुव्रतः यथा-

सकृदेवप्रपन्नाय तवास्मि च याचते
अभयं सर्वभूतेभ्यो ददाम्येतत् व्रतं मम[1] ।।

सदा वृद्ध एव सर्वगोप्तृत्वादिदमीयगोप्तृत्वस्या नौपाधिकतया स्वतत्त्वस्थितिविदाम् सिद्धो न हि यत्नसाध्य इति - सिद्धः ।

शत्रुजिच्छत्रुतापनः

न्यग्रोधोदुम्बरो

तत्र शत्रुजिद्भिः ककुत्स्थपुरुकुत्सादिभिः स्वदिव्यतेजसाप्यायितैरपि परिपन्थिभिस्तापयतीति-शत्रुजिच्छत्रुतापनः ।

निरुक्ति-

पुरुकुत्सककुत्स्थाद्यैश्शत्रुजिद्भिः स्वतेजसा ।
आप्यायितैरपि गणान्यस्तापयति नित्यशः ।
शत्रुजिच्छत्रुतापन इति विद्वद्गणोदितः ।।

न्यग्रोधश्चासौ उदुम्बरश्चेति न्यग्रोधोदुम्बरः
न्यग्भूतैरधः कृताञ्जलिभिरुध्यते स्वप्रसादोन्मुख्येन व्यवस्थाप्यत इति - न्यग्रोधः यथा-
"अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी" इति

---

1- रा०यु० १८।३३

निरुक्ति-

न्यग्भूतैः प्रणतैः स्वानुग्रहोन्मुख्येन रुध्यते
यो व्यवस्थाप्यते नित्यं न्यग्रोधस्स उदाहृत ।।
गुणत्रयादुद्गतं यत परमं धाम चाम्बरम् ।
लक्ष्मीपरिजनादिश्च यस्यास्ति स उदुम्बरः ।
ऊर्ग्वा उदुम्बर इति श्रुतेः -
न्यग्रोधोदुम्बर इति ह्येकं नाम प्रकीर्तितम्
अत्युच्छ्रितानां सेव्यो योऽप्यतिनीचानुवर्तनात् ।
न्यग्रोधोदुम्बरः स स्याद्दशार्णः सर्वसिद्धिदः ।

चाणूरान्ध्रनिषूदनः - ओं चाणूरान्ध्रनिषूदनाय नमः

सहस्रार्चिः - ओं सहस्रार्चिषे नमः

तद्विरोधिनं चाणूरनामानमसुरान्ध्रमल्लं निषूदितवान इति-
चाणूरान्ध्रनिषूदनः ।

सुषामादित्वात् षत्वम्

पाचनशोषणप्रतापनप्रकाशनधर्माण्यध्यदोषापकारीणि
सहस्रमर्चीष्यनेन सूर्ये निक्षिप्तानीति- सहस्रार्चिः ।

सप्तैधा: - ओं सप्तैधसे नम:

सप्तवाहन: - ओं सप्तवाहनाय नम:

अमूर्तिर् - ओं अमूर्तये नम:

रन्धनानि पाकहविस्सोमसंस्थानि प्रत्येकं सप्त संख्यानि इष्टापूर्तरूपाणि सप्त वानस्पत्यास्समिधोऽस्येति - सप्तैधा: ।

तत्प्रकाशकगायत्र्यादिच्छन्दवैदिकमन्त्राभिमानीनि सप्तवाहनानि रविरथधुर्याण्यस्येति वा सप्त वायुस्कन्धान् वहति वाहयतीति वा सप्तवाहन

'वह प्रापणे' धातु: भ्वादि

स्वमधिष्ठेयेभ्यस्तेभ्य: स्वभावविप्रकर्ष उच्यते स्थूलभौतिकमूर्ति व्यावृत्ततया नास्ति तादृशी मूर्तिरस्येति-अमूर्ति: ।

मूर्तिशब्दो हि निरुक्ते बहुव्रीहि कर्मो न लोप: ।

निरुक्ति-

यो वहत्यनिलस्कन्धान् सप्तासौ सप्तवाहन: ।
वाहनानि च सन्त्यस्य सप्त वा सप्तवाहन: ।
स्थूलभौतिकमूर्तिभ्यो व्यावृत्तो मूर्ति रुच्यते ।

अनघो -

चिन्त्यो-

अकर्मवश्यत्वेन तन्मग्नजीवविलक्षण: अनघ: ।

मुक्तौपम्येनापि दुर्निरूपतया चिन्तयितुमर्हशक्येवाचिन्त्य:

स नैति अचिन्त्य: ।

निरुक्ति-

जीवेभ्य: कर्मस्थेभ्यो व्यावृतश्चा नघ: स्मृत: ।
अचिन्त्यो दुर्निरुप: स्यान्मुक्तावुपमयापि स: ।।

भयकृद् - ओं भयकृते नम:

भयनाशन:- ओं भयनाशनाय नम:

अणु: - ओं अणवे नम:

स्वशासनातिवर्तिनां भयं करोतीति -भयकृद् ।

"कृञ: क्विपि तुगित्यादि"

"ञिभी, भये

अज्विधौ भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थमिति भावे अच् गुण: अय् -

तदनुवर्तिनां च भयं नाशयतीति -भयनाशन:

अतिप्रकृष्टमैश्वर्यमतिसूक्ष्मदहराकाशाव्यक्तजीवानुप्रवेशसामर्थ्यात् अणु: ।

"गत्यर्थादणतेरुणश्च" उणादि इत्युप्रत्यय: तदणिमाप्येतदणु: ।

"अणोरणीयान्"[1]

बृहत् - ओं बृहते नम:

विसोणायिव्याप्त्या विपुलपरमव्योमादि चुलकीकृत्य अतिमहता महिम्ना बृहत् ।

पृषत् बृहत्, महत्" उणादि इत्यादिना बृहे ।

---

१- तै०उ० ६ पृ०१० अ०

कृश: - ओं कृशाय नम:

स्थूल:- ओं स्थूलाय नम:

तुलानि लाघति शायिना लघिम्ना सर्वत्राव्याहतगत्वर:-कृश:

"कृश तनूकरणे" इगुपधत्वात् तु: कृशिमानायं लघिमा चेतिप्रकरणात् गम्यते यथा -

"अप्रमेयो नियोज्यश्च यत्र कामगमोवशी

सर्वमिव्यवहितमेकत्र स्थित्वा स्प्रष्टुम् भूमिष्ठस्य च चन्द्रमसं परिमाष्टुं शक्ति:तयातिप्रकृष्टया विशिष्ट: - स्थूल: ।

निरुक्ति-

सर्वत्राव्याहतगतिर्लघिम्ना कृश ईरित: ।

स्थित्वैकत्राखिलं स्पृष्टुंशक्तिर्या महती सदा ।

तया प्रकृष्टा शक्त्या विशिष्ट: स्थूल: उच्यते ।।

गुणभृत् - ओं गुणभृते नम:

निर्गुणो - ओं निर्गुणाय नम:

महान्- ओं महते नम:

स्वसंकल्पेन सर्वं स्वगुणभूतसर्वावस्थं कृत्स्नं बिभर्तीति- गुणभृत् ।

इदमस्य प्रकृष्टमीशितृत्वात्-

"सर्वस्य वशी सर्वस्येशान:" इति

अलब्धस्यतया तत्संस्पर्शेपि अस्पृष्टतद्गुणाः - निर्गुणः ।

परमस्वतन्त्रः इदमस्य परमं वशित्वम्

"विश्वस्य मिषतो वशी"[1]

"सत्वादयो न सन्तीशे यत्र च प्राकृता गुणाः"

इति च प्रत्काम्यमिगच्छानभिधातभूमो उन्मज्जति निमज्जति च यथोदके,

अस्य परमप्रकर्षात् - महान्

"महतः पृषत् वृहत०" इत्यादिना पूर्वन्निपातनम् -

अधृतः - ओं अधृताय नमः

स्वधृतः - ओं स्वधृताय नमः

तादृशवैश्वरुप्यप्रकर्षेण क्वचिद्धृतः न नियमितः इति-अधृतः ।

निरुक्ति-

यश्चानियाम्यः केनापि ह्य(धृत) स तु कीर्तितः

अथ मन्त्रौषधतपस्समाधिसिद्धात् भगवदैश्वर्यम् व्यावर्त्यते सोपाधिकतदैश्वर्यो-क्तोपाधिवधुयात् स्वेन स्वाभाविकेनैश्वश्वर्येण धृत इति वा उक्तहेतुना स्वेन स्वभावेन धृतमैश्वर्यम् स्वधृतं तदस्यास्तीति वा- स्वधृतः ।

धृत उक्तः स्वरतेर्दे स्वशब्दस्य अनुकल्पे

स्वधृत शब्दात् अर्शआद्यच् मत्वर्थीयः ।

---

१- तै०उ० ६ पु० १ अ०

स्वास्य: - ओं स्वास्याय नम:

अथ मुक्तैश्वर्यात् स्वास्य:

आस्या आसनम्

"आतश्चोपसर्गे"[1] इति अङ्० सु शोभना अस्येति हि अविर्भूत स्वाभाविकैश्वर्यरुपम् आसनं दुष्टम् पूर्वमविधातिरोहितत्वात्

"नैवं भगवतस्सदाविभावात् इति

निरुक्ति-

आसनं शोभनं यस्य स स्वास्य इति चोच्यते ।

प्राग्वंशो - ओं प्राग्वंशाय नम:

वंशवर्धन: - ओंवंशवर्धनाय नम:

अथ नित्यानामैश्वर्यात् -प्राग्वंश: ।

"यत्र पूर्वे"[2] इति श्रुति: अनादिमुक्ता: प्राञ्च: तेषां वंश: समुद्भवभूमि: नित्यस्वरुपादिभावनिबन्धनभूत: इति सर्वं हि सर्वथा तदिच्छोपाधिकमिति अविवाद: सस्यास्य संग्रहो वैष्णवे ।

तदाष्टगुणमैश्वर्यं नाथ स्वाभाविकं परम् ।

निरस्तातिशयं यस्य ततस्तोष्यामिकिं त्वहम् " इति

अथ तल्लिक्षणस्य तत्ताद्रूप्यहेतुत्वात् तत्र -वंशवर्धन: ।

निरुक्ति-

नित्यसिद्धस्य वर्गो यो वंश सन्तानलक्षणम् ।

तं वर्धयति यश्चासौ वंशवर्धन उच्यते ।।

---

१- पा०अ० ३।३।१०६

२-पु०सू० ४ अ०

भारभृत् - ओं भारभृते नमः

कथितः - ओं कथिताय नमः

योगी - ओं योगिने नमः

मुक्तानां च बन्ध पुंसनस्वरूपाविभाविस्वप्राप्तिभारं बिभर्तीति-भारभृत्।

तत्र प्रमाणयति कथितः

उक्तवक्ष्यमाणगणवक्ता सर्वशास्त्रेषु यथा-

'वेदेषु च पुराणेषु साङ्गोपाङ्गेषु गीयते'

'यच्चता वाच्यम्'

सर्वम् इदं संगच्छत् इति प्रदर्शितं,

युज्यतेऽनेन इति योगः अघटितघटनं

महाप्रभावः सो विद्यते नित्ययुक्तस्य अस्यास्ति इति योगी।

सर्वकामदः - ओं सर्वकामदाय नमः

आश्रमः - ओं आश्रमाय नमः

योगसिद्धिभ्यो पि अणिमादिकामान् अन्तरायतया-ददाति इति सर्वकामदः। यथा-

'प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः।'[1]

---

१- गीता ६।४१

ततः निवृत्त्य सुभिक्षापरविधेषु वैष्णवगेहेषु तेषां विश्रान्ति हेतुः आश्रमः ।

श्रमणः - ओं श्रमणाय नमः

योगजन्मभ्याम् अनुपक्षीणसर्वसंस्कारैः तत्र समाधिशेणो नायासेन श्रम्यते अभ्यस्यते इति -श्रमणः ।

"युवोरनाको"[1]

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ।।[2]

दामस - ओं दामाय नमः

एवं स्वयोगाभिमुख्यमात्रेण ते योगभ्रष्टा अपि दुर्गं तरितुं दामन्ते स्मात् इति - दामः घञ्

"नहि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति"[3]

सुपर्णः - ओं सुपर्णाय नमः

एवं प्रत्यापन्नसमाधीन् समाधिविपाकद्वारा तमसः पारं नयति इति- सुपर्णः

"स्वपारं भगवान्नयति" इति मोलः

---

१- पा०ज० ७।१।१

२- गीता ६।४३

३- गी० ६।४०

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः[1] ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ।

धनुर्धरो - ओं धनुर्धराय नमः

इह्नूनुपासकानां कण्टकोद्धरणाय स्वयमेव-धनुर्धरः ।

"एतदर्थं हि लोकेस्मिन् क्षत्रियैर्धार्यते धनुः"
"धार्यते क्षत्रियैश्चापो मा तशिब्दो भवेदिति"

निरुक्ति-

उपासकानां भक्तेर्यः प्रत्यूहविनिवृत्तये
धनुषो धारको नित्यं स्वयं सस्या द्धनुर्धरः ।

धनुर्वेदो - ओं धनुर्वेदाय नमः

दण्डो - ओं दण्डाय नमः

अन्येपि सुरनरेन्द्रादयो धनुरादिकं तत्च्छास्त्रप्रवर्तके स्मिन्विन्दन्तीति
धनुर्वेदः ।
वेदधर्मदोमंकरनृपतिमुखेन दण्डनीत्या
दुष्टान् दाम्यति इति - दण्डः

निरुक्ति-

सुरेन्द्राद्या धनुश्शास्त्रं यस्माद् विन्दन्ति स स्मृतः ।
धनुर्वेदो ह्यष्टवर्णो धनुर्वेदप्रदायकः ।
वेदधर्मारिष्टतातिनृपादिमुखतः खलान् ।
दण्डनीत्या दाम्यतीति दण्डः स्याद्द्तुवर्णकः ॥

---

१-गीता ६।४५

दमयिता- ओं दमयित्रे नमः

दमः - ओं अदमाय नमः

स्वयंच रावणादीन् ताण्डोल्येन - दमयिता ।

न चास्यान्यः कश्चिदेवमिति -अदमः यथा-

भस्मकुर्याज्जगत्सर्वं मनसैव जनार्दनः ।

न तु कृत्स्नं जगच्छक्तं किंचित् कर्तुं जनार्दने[1] ।।

अपराजितः - ओं अपराजिताय नमः

सर्वसहो - ओं सर्वसहाय नमः

एवं सर्वतोमुखे प्रशासनेक्वचित् कदाचित् कुतश्चिद् प्रतिहतः

अपराजितः - यथा-

"दाशार्हमपराजितम्"

स्वशासनेन सर्वं देवतान्तरमपि मन्दाधिकारिणामाराध्यतया

सहते विमतीति - सर्वसहः ।

नियन्ता- ओं नियन्त्रे नमः

तत्र तवद्वचीन् प्रोचयन् नियच्छतीति-नियन्ता ।

निरुक्ति-

देवतेषु च सर्वेषु तवदिच्छां प्रोचयन् ।

मन्दाधिकारिणां यो सौ नियन्ता स्यान्नियच्छति ।।

---

१- मा०उ० ६७।८

नियमो - ओं नियमाय नमः

यमः - ओं यमाय नमः

तत्फलं च जात्यायुर्भोगादिकं नियम्यते स्मिन्निति-नियमः ।

"यमस्समुपनिविष्णुं च"[1] इत्यपि यथा-

"लभते च ततः कामान् मयैव विहितान् हि तान्"[2] ।

तत्तत्फलनियमाकान् यमादीनपि यच्छतीति- यमः

"प्रभवति संयमने ममापि विष्णुः"[3]

सत्त्ववान् - ओं सत्त्वते नमः

परमप्रकाशलाघवसुखसंपदा मोक्षमूलं सत्त्वं

साक्षादधिष्ठ्यमस्येति- सत्त्ववान् यथा-

"महान् प्रभुर्वै पुरुषः सत्त्वस्येष प्रवर्तकः"[4] इति

द्रुहिणादिमुखे हि रजस्तमसो श्रमिति वाराहे देवः

तच्च पैतामहं वृत्तं सर्वशास्त्रेषु पठ्यते ।[5]

यद्रजस्तमसो पेतं सोहं नास्त्यत्र संशयः ।।

---

१-पा०ज०३।३।६३

२- गीता ७।२२

३- वि०पु० ३।७।१३

४- श्वे०उ० ३।१२

५-व०पु०

सात्त्विकः -ओं सात्त्विकाय नमः

सत्यः - ओं सत्याय नमः

धर्मज्ञानवैराग्यैश्वर्यरूपफलनियमनेन च सत्त्वमर्हतीति-
सात्त्विकः ।
"तदर्हति"[1] इति ठक्

सात्त्विकशास्त्रप्रतिपाद्यतया यथार्थभव: सत्यः ।

सत्ये प्रतिष्ठितः कृष्णस्सत्यमस्मिन् प्रतिष्ठितम् ।
सत्यासत्ये च गोविन्दस्तस्मात्सत्यस्सतांमतः ॥[2]

सत्यधर्मपरायणः - ओं सत्यधर्मपरायणाय नमः

अभिप्रायः- ओं अभिप्रायाय नमः

निरुपाधिस्सात्त्विकचोदनाधिकारिफलरूपधर्मस्य
परायणं परमप्रापणम् इति - सत्यधर्मपरायणः ।
सत्यधर्मनिष्ठेन निरुपाधिकोद्देश्यतया अभिप्रेतः इति-अभिप्रायः ।

प्रियार्हः - ओं प्रियार्हाय नमः

एवमेवमर्थ्यज्ञानिनं प्रियमेवार्हतीति इति- प्रियार्हः ।
एकभक्तिणु हि भगवतः स्वत एव प्रावण्यम् आतार्थार्थिजिज्ञासुणु
औदार्यबलात्प्रवणेन ।

---

१- पा०अ० ५।१।६२

२- भा०उ० ६६।१२।१३

"तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते"[1]

"उदारास्सर्व एवैते"[2] इति

अर्हः - ओं अर्हाय नमः

प्रियकृत् - ओं प्रियकृते नमः

अनन्यस्पृहाणां तेषामप्ययमेव योग्य इति - अर्हः ।

"आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम्"[3]

अन्यपरानपि भजतः तच्छन्दानुवर्तनेन प्रियान् करोति इति ।

प्रियकृत् ।

"निराशीः" कर्मसंयुक्तान् सात्त्वतांश्चाप्यकल्पयन्" इति

निरुक्तिः -

अनन्येच्छावतां पुंसां योग्यस्सोर्ह इति स्मृतः ।

भजतोप्यन्यभक्तान् यः स्वप्रियान् कुरुते सदा ।

छन्दानुवर्तनेनेति प्रियकृत् स च कथ्यते ।

प्रीतिवर्धनः - ओं प्रीतिवर्धनाय नमः

विहायसगतिर् - ओं विहायसगतये नमः

अथोत्तरोत्तरगुणाविष्कारेण तां प्रीतिं वर्धयति इति

प्रीतिवर्धनः ।

---

१- गीता ७।१७

२- गीता ७।१८

३- गीता ७।१८

'जगतां प्रीतिपूर्वकम् ।ददामि बुद्धियोगं तम्'[1] इति

तथा निरुढभक्तिपरकोटिभिः विहायसं पदमेवगम्यते स्मात् इति विहायसगतिः,स खल्वाह -

'भुक्त्वा च भोगान् विपुलान्त्वमन्ते मत्प्रसादतः ।
ममानुस्मरणं प्राप्य मम लोके निवत्स्यसि'[2] ।।

इति सूत्रञ्च -

'तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया' इति ।

निरुक्ति-

गुणाविष्करणान्नित्यमुत्तरोत्तरतोऽधिकम् ।
यस्तु प्रीतिं वर्धयति प्रीतिवर्धन ईरितः ।।
निरुढभक्तियुक्तैर्हि नित्यं यस्मात्तु गम्यते ।
विहायसं परं व्योम विहायस गतिस्तु सः ।।

ज्योतिः- ओं ज्योतिषे नमः

तदारोहणनिश्रेण्या अर्चिरादिगतेः प्रथमं पदमर्चिराह- ज्योतिः ।

निरुक्ति-

स्वप्राप्तेः साधनत्वाद्यः स्वयं नित्यं विशेषतः ।
अर्चिरादिगते ज्योतिः प्रथमं पर्व कथ्यते ।।

---

१- गी०१०।१
२- म०गी०।

सुरुचिः - ओं सुरुच्ये नमः

थोत्यते स्मादिति श्रुतेरिसन् जादेशश्च यथा-

"तेऽर्चिषमभिसंभवन्ति"[1]

इति उपासनप्रसन्नेन भगवता उपासकातिवहने नियुक्तत्वेनातिवाहिका ह्यर्चिरादयः ।

"अर्चिरादिना तत्प्रथितेः"[2]

"आतिवाहिकास्तल्लिङ्गात्"[3]

इत्यादौ चिन्तिताः ।

सूर्योदयाद्रोचते इति रुचिरहः सा स्य शोभनेति सुरुचिः ।

"इगुपधात् कित्" इति इन् कित्

"अर्चिषो ह"[4] इति

अहः शुभं यस्य स वै सुरुचिः परिकीर्तितः ।

हुतभुग्विभुः - ओं हुतभुग्विभवे नमः

अमृतपरिणामं हुतं भुन्जानः सोमः यस्मिन् शुक्लपक्षाद्वारा विभुः पूर्णो भवति सः हुतभुग्विभुः।

"अह्नआपूर्यमाणः पक्षः" इति ।

निरुक्ति-

सुधापरीणामहुतं भुन्जानश्चन्द्रमास्तथा ।

विभुः पूर्णो भवेधस्मिन् स वै स्यात् हुतभुग्विभुः ॥

---

१- छा० ५।१०।१

२- शा० ४।३।१

३- शा० ४।३।४

४- छा० ५।१०।१

रविः -ओं रवये नमः

विरोचनः- ओं विरोचनाय नमः

उत्थानकालतया उदगयनद्वारा रुयते प्रशस्यते इति रविः ।

"आपूर्यमाणपक्षात् यान् षडुदन्वेति मासान्"[1] इति ।

द्वाभ्यामयनगतिभ्यां संवत्सरः रथेनादित्यं विरोचयतीति विरोचनः ।

"मासेभ्यस्संवत्सरम्"[2]

"संवत्सरो सा वादित्यः"[3]

सविता- ओं सवित्रे नमः

सूर्यद्वारा वृष्टिसस्यादिकं सूते इति -सविता ।

"संवत्सरादादित्यम्"[4]

"वायुमब्दाद विशेण विशेणाभ्याम्"[5]

न्याय्यं व्यवधानम्

निरुक्ति-

वृष्टिसस्यादिकं सूते सविते ति रवेर्मुखात् ।

---

१- छा० ५।१०।१

२- छा० ५।१०।२

३-तै० ६ न्यासविधा

४- छा० ५।१०।२

५- ब्रा० ४।३।२

रविलोचनः - ओं रविलोचनाय नमः

अथ चन्द्रमाः अमानवापरनामा विद्युद्वरुणश्च रविणा सूर्येण तदुपलक्ष्य तद्रश्मिसंक्रान्त्यादिमुखेन चन्द्रविद्युद्वरुणान् लोचयति दर्शयतीति - रविलोचनः ।यथा-

"आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्"[1]

निरुक्ति-

सूर्यस्य रश्मिसंबन्धाद् विद्युतरुणचन्द्रकान् ।
निरन्तरं लोचयति रविलोचन ईरितः ।।

अनन्तहुतभुग्भोक्ता- ओं अनन्तहुतभुग्भोक्त्रे नमः

सप्ततन्तुषु हुतं भुक्त इति इन्द्रो हुतभुक् - प्रजाः भुनक्ति पालयतीति प्रजापतिः भोक्ता तौ महान्तावस्येति -अनन्तहुतभुग्भोक्ता ।

"स इन्द्रलोकं स प्रजापतिलोकम्"[2]

निरुक्ति-

महत्त्वान् हुतभुग्भोक्ता भुनक्तीति प्रजाविधिः ।
सो नन्तहुतभुग्भोक्ता महान्तौ यस्य तौ सदा ।।

---

१- छा०उ० ५।१०।२

२- कौषी० १-३

नैकदो - ओं नैकदाय नम:

ग्रज: - ओं अग्रजाय नम:

एकं ददातीति एकदा: तद्भिन्ना नैकदा: असंख्येयमालान्जनवास: प्रभृति ब्रह्मालंकारदायिन्यो मुक्ताभ्युत्थानविदो दिव्याप्सरसो स्येति - नैकद: ।

तं पंचशतान्यप्सरस उपधावन्ति शतं -
मालाहस्ताश्शतमन्जनहस्ता: इत्यादि[1]
तं ब्रह्मालंकारेणालंकुर्वन्ति

एवं प्राप्तवतां मुक्तानामग्रे सह सर्वैश्वर्यश्रिया यथापर्यङ्कविधं परमभोग्या जायत इति अग्रज: ।

"जनी प्रादुर्भावे"
"सप्तम्यां जनेर्ड:"[2] इति ड: टिलोप: बहुलग्रहणात् ।

"ऋज्रेन्द्राग्र०" इत्यादिना रकि इदित्त्वान्नुमो निपातनाल्लोपे "नेट्"[3] इतीट्प्रतिषेधे च अग्रशब्द उक्त: ।

सदामर्षी - ओं सदामर्षिणे नम:

लोकाधिष्ठान - ओं लोकाधिष्ठानाय नम:

तत: प्रभृति सर्वकालं तेन कृतप्रतिकृतमर्षितुं निवोढुं शीलमस्येति सदामर्षी यथा-

---

१- कौषी० १।४
२- पा०अ० ३।२।९७
३- पा०अ० ७।२।८

"मृण तिरिदायाम्"
"अनुक्रमेणूत्क्रमेण लोकेण"[1]
इति श्रुतानां मुक्तभोग्यानां नित्याश्रय: -लोकाधिष्ठानम् ।
तत्र च अद्भुत: ।

निरुक्ति-

लोकानां मुक्तभोग्यानां लोकाधिष्ठान् माश्रय: ।
तत्सदासर्वथा सर्वैर्भुज्यमानोप्यपूर्ववत् ।
स्मयनीयो द्भुत: ।

सनात् - ओं सनाते नम:

प्रोक्तस्तेषां संभजनात् सनात् ।

सनातनतम: - ओं सनातनतमाय नम:

कपिल:- ओं कपिलाय नम:

सदातनोपि तदातनवन्नित्यभोग्यतया अतिशयितस्सनातन:
पुराण: इति सनातनतम: ।
नित्यनूतनभोग्यत्वात् सनातनतम: स्मृत:
स श्रिरुप: तत्रोच्यते मध्यस्थनीलतोयदविद्युल्लेखोज्ज्वलवर्णतया कपिल:
पिङ्गल इति-कपिल: ।

---

छा० १-२

"किमु कान्तौ" फबृ,वर्णे,इलव् प्रकरणे

"कमेः पश्च" "कवेः इति वा पाठः उणादि

इति लव् मस्य पाठान्तरे बस्य च वा पकारः

कपिरव्ययः - ओं कपये अव्ययाय नमः

स्वयमप्यव्ययः अप्ययो वानुपक्षीणः कम् इहायं सुखार्थः तदनुभवमुखनिर्वृत्तिं पिबति पाति रक्षतीति इति वा- कपिरव्ययः ।

"पा,पाने" "पा रक्षणे"

"इन् सर्वधातुभ्यः" इति इन्

"अच् इः" पूर्वत्र बाहुलकात् इगुपधात् कित्" इति कित्त्वमन्यतोऽपि भवति अपरत्र अश्रुतस्त्यमपि इ प्रत्ययस्य कित्त्वं बाहुलकात्लभ्यते तस्य हि मह प्रभावः इयांस्तु विशेषः इनः कित्त्वं श्रुतं क्वचिदन्यतोऽपि रस्तु अश्रुतमेव कुत्रचित् कल्प्यते इति ऐदमर्थ्येन हि अच इरित्येव वक्तव्ये इनोऽपि ग्रहणम् कित्त्वादातो लोपः"

"कै शब्दे" "कृ०शब्दे"

"कनी,दीप्तिकान्तिगतिषु" कायतेरात्त्वम्, त्रिभ्योऽपि

"अन्येष्वपि०" इति डः टिलोपः

"इण् गतौ" धातुः

"एरच्" इति भावे अच् गुणः अय् विपूर्वः पाठान्तरे तु अयमेवापिपूर्वः तत्र

---

१- पा०अ० ३।२।१०१

२- पा०अ० ३।३।५६

"वष्टिभागुरिरल्लो०" इति भागुरीष्ट्या पर तलोप: शेषं प्राग्वत् उभयत्रापि यण् यकार: ।

नञ्पूर्वो बहुव्रीहि: नञो न लोप: संहितायां पूर्वस्य रोरावसानिको विसर्ग: ।

निरुक्ति-

अनस्वरसुखं पाति स उक्त: कपिरव्यय: ।

स्वस्तिद: - ओं स्वस्तिदाय नम:

स्वं महन् मङ्गलं ददातीति स्वस्तिद: ।

निरुक्ति-

भक्तेभ्यो मङ्गलंस्वस्ति तद्दानात् स्वस्तिद: स्मृत: ।।

स्वस्तिकृत् - ओं स्वस्तिकृते नम:

स्वस्ति: - ओं स्वस्तिने नम:

स्वस्तिभुक् - ओं स्वस्तिभुजे नम:

स्वगुणै: ,स्वभोगाशिषं करोतीति स्वस्तिकृत् ।

स्वयमेव महन् मङ्गलं स्वस्ति ।

"स्वस्ति शिवाशिषो:" उदा० ।

"सावसेश्शित्"[1]

इति ति प्रत्यय: । शित्वात् भूमावाभाव ।

सर्वमेतत् स्वस्ति भुनक्ति पालयतीति स्वस्तिभुक् ।

निरुक्ति-

स्वस्ति स्वभोगाशिषं य: करोति स्वस्तिकृत् च ।

महामङ्गलरूपत्वात् स्वयं स्वस्तीति कथ्यते ।

पालनान्मङ्गलस्यैव स्वस्तिभुक् चेति गम्यते ।

---

१-उणा०पा० ४

स्वस्तिदक्षिणः - ओं स्वस्तिदक्षिणाय नमः

अरौद्रः - ओं अरौद्राय नमः

अन्यदपि स्वपरिचरणानुगुणं दिव्यशरीरशक्त्यादि स्वस्ति स्वात्मदानदीर्घसत्रे ऋत्विग्भ्यो देया दक्षिणा स्येति स्वस्तिदक्षिणः। परमैश्वर्ये पि गुणशीतलिम्ना अरौद्रः।

निरुक्ति-

शक्त्याद्या प्रकृतिः स्वस्ति स्वात्मदानं च दक्षिणा।
आत्मार्पणाख्ययागे तु यस्यास्ति स्वस्तिदक्षिणः।
सर्वैश्वर्ये पि सुगुणः शीतलो रौद्र उच्यते।

कुण्डली - ओं कुण्डलिने नमः

यथोचितनित्यदिव्यभूषणः कुण्डली।

निरुक्ति-

दिव्यभूषणवान् यो सौ कुण्डलीति प्रकथ्यते।

चक्री - ओं चक्रिणे नमः

तादृशदिव्यायुधः, चक्रं तदुपलक्ष्यं तादृशदिव्यायुधजातं नित्यमस्येति चक्री।

"चक तृप्तौ प्रतिघाते च" इति धातोः, रक्प्रकरणे-
"चकिरम्योरुच्चोपधायाः" इति रक्प्रत्यये बाहुलकादिहनोत्त्वम्

निरुक्ति-

"नित्यदिव्यायुधश्चक्री"

विक्रमी - ओं विक्रमिणे नमः

अजितशासनः - ओं अजितशासनाय नमः

गाम्भीर्यानुकूलविलासः विक्रमी ।

विरिञ्चिपुरन्दराद्यलङ्घ्याज्ञः ऊजितशासनः[1]

क्रमु-पादविक्षेपे" विपूर्वः, भावे घञ्[2] "नोदात्तः"

इत्यादिना वृद्धिः ततः संज्ञायां मनमाभ्याम्" इति ठनो बाधनार्थं नियमितो मत्वर्थीयः उक्तार्थं इनिः । लोपदीर्घादि ।

निरुक्ति-

"स्याद्विलासी तु विक्रमी ।

ब्रह्माद्यलङ्घ्यस्वाज्ञो यः स स्यादूजितशासनः ।

शब्दातिगः - ओं शब्दातिगाय नमः

अनन्तजिह्वेनानन्तेन अनन्तशाखैराम्नायैस्साक्षात् सरस्वत्या च दुरुदाहरमहिमा शब्दातिगः ।

निरुक्तिः-

अनन्तशाखैराम्नायैर्वाग्देव्यानन्तभोगिना ।

वक्तुं ह्यशक्यमहिमा यस्य शब्दातिगोऽस्ति सः ।

---

१- पा०अ० ७।३।३४

२-पा०अ० ५।२।१३६

शव्दसह: - ओं शव्दसहाय नम:

शिशिर:- ओं शिशिराय नम:

अथगजेन्द्रमोक्षणम् अस्पष्टशव्दानां तिरश्चामपि आर्तशव्दम् अतिभारमिव सहते इति शव्दसह: ।

"भक्तिं तस्यानुचिन्त्येति
आर्तशव्दश्रवणानन्तरम् अतित्वरया गत: शिशिर: ।
शश् प्लुतगतौ" इति धातो: -
"अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिरा:" इति

किरच् प्रत्यय: ।

निरुक्ति:-

अतिभारमिवास्पष्टं तिरश्चां शव्दमार्जितम् ।
सहते य: शव्दसहो वरुणो मनुरुत्तम: ।
गजेन्द्र पालनार्थं य: शिशिरस्त्वरया गत: ।

शर्वरीकर: - ओं शर्वरीकराय नम:

तथा शर्वरी हिंस्रापरविदारिणी पन्चायुधी करे अस्येति

शर्वरीकर: । कृञ् पचाद्यच् ।

"शृणाते: कृशृवृञ्चतिभ्य: ष्वरच्" इत्यौणादिक ष्वरच् प्रत्यय:।

षित्वात् ङीष् ।

निरुक्ति-

उच्यते शर्वरीशव्दा हिंस्रापरविदारिणी ।
पन्चायुधी करे चास्येत्युदित: शर्वरीकर: ।।

अक्रूर: - ओं अक्रूराय नम:

गजपरिजिहीर्षया क्रूरस्थैर्प्यायुधैर्ग्राहमपि झटित्यकृतवान् इति अक्रूर: ।

'कृतेश्छ: क्रू च' उणादौ इति रक् प्रत्यय: क्रू आदेशश्च -यथा-

ग्राहग्रस्तं गजेन्द्रं च तं ग्राहं च जलाशयात् ।
उज्जहाराप्रमेयात्मा तरसा मधुसूदन:' इति ।

पेशलो - ओं पेशलाय नम:

संभ्रमादयथातथस्रग्भूषणाम्बररमणीय:, पेशल: ।
'पिश- अवयवे' 'वृषादिभ्यश्चित्' इति कल:, चित् उणादौ कित्त्वे पि बाहुल्काद् गुण: ।

निरुक्ति-

यो सौ धृतायुधैर्ग्राहमक्रूरो मङ्०क्ष्व कृतवान्
त्वरातिशयत: स्रस्तस्त्रग्भूषणाम्बर सुन्दर:।
गजेन्द्ररक्षासमये यो सौ स्यात् पेशल: स्मृत:।।

दक्ष: - ओं दक्षाय नम:

दक्षिण:- ओं दक्षिणाय नम:

क्षिप्रमागन्ता (दक्ष:) दक्ष् वृद्धौ शीघ्रार्थे च' इहायं शीघ्रार्थ: । पचाद्यच् । तथा गत्य घिङ्० मां दूरगतो हं त्वमिति सान्त्वनैर्गजेन्द्रस्यानुकूल दक्षिण: । दक्ष वृद्धौ 'द्रुदक्षिभ्याम् ० उणादौ इतीनन् यथा-

"प्रीतिमान् पुण्डरीकाक्षः शरणागतवत्सलः ।
भजन्तं गजराजानं मधुरं मधुसूदनः" ।। इत्यादि

निरुक्ति-

दक्षो यो द्रुतमागन्ता रक्षणाय स उच्यते ।
गजेन्द्रस्य प्रपन्नस्य यः प्रीतो दक्षिणस्तु सः ।।

दामिण्णां वरः - ओं दामिण्णां वराय नमः

तद्दर्शनेन धृतात्मा दामिण्णां वरः ।
"अभवत्तत्र वै देशः । इति ।

निरुक्ति-

गजेन्द्रदर्शनमात्रो धृतात्मा दामिण्णां वरः ।

विद्वत्तमो - ओं विद्वत्तमाय नमः

तच्चिकित्सायाम् विद्वत्तमः अथवा स्वहस्तसंस्पर्शादिना तच्चिकित्सा॰ अयमतिशयेन विद्वान् ज्ञाता इति विद्वत्तमः ।

"विद् ज्ञाने" ततो वर्तमाने लट् "लटः शतृशानचावप्रथमासमानाधिकरणे"[1] इति लटः शता शित्त्वात् सार्वधातुकत्वे कर्तरिशप् तस्य आदादिको लुक् शनुश्च ।

---

1- पा०अ० ३।२।१२४

निरुक्ति:

गजेन्द्रार्तिचिकित्सायां विद्वान् विद्वत्मस्तु सः ।

वीतभयः - ओं वीतभयाय नमः

तत्समागमतुमुलोपलम्भात् वीतं भयं गजेन्द्रस्य इति वीतभयः ।

निरुक्ति-

वीतं भयं गजेन्द्रस्य यस्माद् वीतभयश्च सः ।

पुण्यश्रवणकीर्तनः - ओं पुण्यश्रवणकीर्तनाय नमः

श्रुतेन हि कुरुश्रेष्ठ स्मृतेन कथितेन वा ।
गजेन्द्र मोक्षणेनैव सद्यः पापात् प्रमुच्यते' इति ।

पुण्यश्रवणकीर्तनः 'कृत संशब्दने' इति धातोः सिद्ध्यति ।

निरुक्ति-

गजेन्द्रमोक्षणं श्रुत्वा सद्यःपापात् प्रमुच्यते ।
यस्मात् तत्कीर्तनं पुण्यं श्रवणं चेति स स्मृतः ।।
द्वादशानां मनुश्रेष्ठः पुण्यश्रवणकीर्तनः ।।

उत्तारणो - ओं उत्तारणाय नमः

दुष्कृतिहा - ओं दुष्कृतिघ्ने नमः

तौसरश उत्तारितवान् इति उत्तारणः ।
'तॄ प्लवनतरणयोः' इति धातोः ल्युट् ।

स्थलस्थं दारयामास ग्राहं चक्रेण माधवः[1] इति

दुष्कृतिनं ब्रह्मविदपचारात् अपुण्यकर्माणं ग्राहं हन्ति स्मेति दुष्कृतिहा ।

निरुक्ति-

सरसस्तं तारितवान्नित्युवारण ईरितः ।
ग्राहं विदारयामास यस्माद् दुष्कृतिहा च सः ।।

पुण्यो - ओं पुण्याय नमः

दुःस्वप्ननाशनः - ओं दुःस्वप्नाशनाय नमः

अनया कीर्त्या अस्मदादीनपि पुनाति स्वयमेतानेवं कारयित्वा शुभकर्मा भवति तान् पुण्ययति स्वप्राविततत्व-लक्षणपुण्यवतः करोति इति वा पुण्यः ।
पून्नाः पुणतेर्वा त्रैधेष्वपि हिकल्पेषु न्यरुप्यतायं प्रागेव ।
क एवं वचनात् दुःस्वप्नोपशमनतया स्वात्मानं गजेन्द्रं तत्त्व सरः स्मरतामाव्यनिष्टसूचनं दुःस्वप्नं नाशयति अपनोदयतीति - दुःस्वप्ननाशनः ।

निरुक्ति-

कीर्त्यास्मदादीनपि यो गजेन्द्रत्राणरूपया ।
पुण्यः स स्यात् पुनातीति षडर्णः पावनत्वतः ।।
गजेन्द्रमोक्षणाध्यायजपाद्दुःस्वप्नजं फलम् ।
नाशयत्यन्जसा सो ऽसाविति दुःस्वप्ननाशनः ।।

---

१-वि०ध० ६६

वीरहा - ओं वीरघ्ने नमः

रक्षणः - ओं रक्षणाय नमः

वीरहा - पूर्ववत्

तं स्पर्शनपरिरम्भणसान्त्वनादिभिः रक्षितवान् रक्षणः ।

"रक्ष, पालने"
"कृत्यल्युटः"[1] इति बाहुलकात् कर्तरि ल्युट्
"बहुलमन्यत्रापि"[2] इति युज वा" अनः
"अट्कुप्वाङ्०[2] इति णत्वम्

निरुक्ति-

स्पर्शसंश्लेषणाद्यैस्तं रक्षतीति स रक्षणः ।

जीवनः - ओं जीवनाय नमः

पर्यवस्थितः -

स्वहस्तेन हननात् ग्राहमपि गन्धर्वत्वेन जीवयम् - जीवनः ।

सहि देवलशापेन हूहूर्गन्धर्वसत्तमः ।
ग्राहत्वमगमत् कृष्णात् वधं प्राप्य दिवं गतः[3] ।।

निरुक्ति-

स्वहस्तेन हतं ग्राहं गन्धर्वत्वेन जीवयन् ।
पूर्वशापं निरस्याथ यस्तिष्ठति स जीवनः ।

---

१- पा०अ० ३।३।११३
२- पा०अ० ८।४।२
३- विष्णु० १६

अनन्तरुपो - ओं अनन्तरुपाय नमः

अनन्तश्रीर् - ओं अनन्तश्रिये नमः

ईदृंशि सद्यः संपाद्यानि रुपाण्यस्येति - अनन्तरुपायः ।

तेभ्यो देयाः स्वप्राप्तिपर्यन्ताः अनन्ताः श्रियो प्यस्येति-

अनन्तश्रीः ।

ततो दिव्यवपुर्भूत्वा हस्तिराट् परमं पदम् ।जगाम इति

जितमन्युः- ओं जितमन्यवे नमः

भयापहः - ओं भयापहाय नमः

यः शरणागतगजेन्द्रद्वेषिणो जलकीटाय क्रोधःस इदानीं

जितः इति जितमन्युः ।

अस्मदादीनामपि स्ववात्सल्येन तादृशानाथत्वमयं वध्यादित्या-

शंसनार्हः भयापहः ।

चतुरस्रो - ओं चतुराश्राय नमः

गभीरात्मा - ओं गभीरात्मने नमः

विदिशो - ओं विदिशाय नमः

यद्यपि स्वमहिमोचितं गर्जते गजाय श्लथाम्बराभरणमालं

जगाम यद्यपि ग्राहजलकीटाय चुक्रोध तथापि चतुरास्रः ।

संवैतकारी आश्रितार्थः संभ्रमो हि साम्प्रतम् इति -

अन्येषां चतुर्मुखमुखानाम् अप्रधृष्यगम्भीर्यः गम्भीरात्मा ।

तेषां विनयगद्मदस्तुतिगिरामस्य दूरे विविधाः दिशा देशा इति - विदिशः ।

निरुक्ति-

समवेतकारी यः स्याद् चतुरस्रः स कीर्तितः ।

विनयाद्मद्गदस्तोत्रधात्रादीनां विशेषतः ।

दूरेस्य विविधा देशा विदिशः स तु कीर्तितः ।

व्यादिशो - ओं व्यादिशाय नमः

दिशः - ओं दिशाय नमः

तेषाम् अभिमतं तत्तत् पदम् अतिसृजतीति- व्यादिशः ।

इगुपधत्वात् कः

न तान् गजेन्द्रवदन्तरङ्गीकरोति किं तु आज्ञापयतीति-दिशः पूर्ववत कः ।

निरुक्ति-

ब्रह्मादीनां तत्तत्स्थानसर्जनाद् व्यादिश श्च सः

धात्रादीन्सर्वकृत्येषु ह्याज्ञापयति यस्सदा ।

दिशः स तु समाख्यातः षडर्णो मनुरुत्तमः ।।

भूभुवो - इति पूर्ववत्

लक्ष्मीः- ओं लक्ष्म्यै नमः

सुवीरो - ओं सुवीराय नमः

इति तेषाम् लक्ष्मीः सर्वसंपच्च
"भवद्मतं मे राज्यं च जीवितं च सुखानि च"[1] इति

कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः।
कृष्णः परायणं तेषां ज्योतिषामिव चन्द्रमाः ॥[2]

रुचिराङ्गदः - ओं रुचिराङ्गदाय नमः

जननो - ओं जननाय नमः

तेभ्यस्त्वं रुचिरम् अतिमनोहरमनुभवयोग्यं अङ्गंददातीति
रुचिराङ्गदः यथा-
"न ते रुपम्" इति -
अथ सर्वभगवद्व्यापाराणां प्रयोजनमभिधीयते तदनु-
भवदामकरणयुक्तानन्यानपि जनयतीति जननः
"जनी प्रादुर्भावे" णिच्
"जनिवध्योश्च"[3] इति प्रतिषेधात् नोपधावृद्धिः ल्युरित्यादि
अनः णिलोपः।

---

१- रा०यु० १६-६

२- भा०द्रो० १८३-२४

३- पा०अ० ७।३।३५

जनजन्मादिर् - ओं जनजन्मादये नमः

भीमो - ओंभीमाय नमः

तेषां जनानां जन्मनः आदिर्निमित्तंप्रयोजनमिति- जनजन्मादिः

यथा -

"अद्य मे सफलं जन्म"[१]

"जन्मन्यविफला सैका या गोविन्दाश्रया क्रिया ।

सुजन्मदेहमत्यन्तं तदेवाशेषजन्तुषु

यदेव पुलकोद्भासि विष्णुनामनि कीर्तिते ।

"अद्य जन्म यथार्थं मे

"भीमो - इति पूर्ववत् ।

निरुक्ति-

अथोच्यते त्र भगवद्व्यापाराणां प्रयोजनम् ।

जननो जनजन्मादि नवाणो जन्मनाशकः ।।

भीमपराक्रमः - ओं भीमपराक्रमाय नमः

आधारनिलयो - ओं आधारनिलयाय नमः

अन्येष्वपि जगदहितनिरतेषु हिरण्यादिषु भीमपराक्रमः

भयमप्यनुग्रह एव यथोन्मादिनो निगलादिनिग्रहस्तस्य तद्वाध्यानां

चानुग्रहः इति -

---

१ विoपुo ५।१।७२

धार्मिकतया जगदाधारा: प्रह्लादविभिषणपाण्डवादय: तेषा:

निलय: आधारनिलय: ।

ते ह्याधारा: यथा श्रीविष्णुस्मृतौ -

वर्णाश्रमाचारपरा: सन्त: शास्त्रैकतत्परा: ।

त्वां धरे धारयिष्यन्ति तेषु त्वद्भारमाहितम्[1] इति

धाता- ओं धात्रे नम:

पूर्ववत् सदृश्य:

पुष्पहास: - ओं पुष्पहासाय नम:

प्रजागर: -ओं प्रजागराय नम:

एवं निष्पादितस्वानुभवशक्तीनां सायंपुष्पस्येव हास:

भोग्यतोल्लासो स्येति - पुष्पहास:

'हसे,हसने' इति भावे घञ् वृद्धि:

'पुष्प, विकसने' दिवादि पचाधच् बहुव्रीहि व्यधिकरणानामप्यस्ति

हि स: ।

'सप्तमीविशेषणे बहुव्रीहौ'[2] इत्यत्र सप्तमीग्रहणात् ज्ञापकात्

इत्युक्तम् ।

सस्येष्विव कृषीवल: तेषु रात्रिंदिवं प्रजागर्तीति - प्रजागर: ।

य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण:'

जागृ निद्राक्षये' प्रपूर्व: पचाधच् गुणो रपर: ।

---

१- वि०स्मृ०

२- पा०अ० २।२।३५

ऊर्ध्वग: - ओं ऊर्ध्वगाय नम:

सत्पथाचार:- ओं सत्पथाचाराय नम:

कुतस्तदर्थमनिद्रो यत: ऊर्ध्वग:

स्वभावतुङ्ग: यथा-

'महात्मना संश्रयमभ्युपेतो नैवावसीदत्यतिदुर्गतोऽपि' इति

तन्महत्त्वफलम् सत्पथे स्वाभाविकदास्यमार्गे आचरणं

तेषां प्रवर्तनमस्येति - सत्पथाचार: यथा-

'अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्' इति ।

निरुक्ति-

यो सौ स्वभावतस्तुङ्ग ऊर्ध्वग: परिकीर्तित: ।

सत्पथाचार इत्युक्त: सन्मार्गे तत्प्रवर्तनात् ।

प्राणद: -

इति पूर्ववत् रूपम्

प्रणव: - ओं प्रणवाय नम:

पण:- ओं पणाय नम:

प्रमाणं - ओं प्रमाणाय नम:

स्वचरणारविन्दयो: तान् प्रणामयतीति प्रणव: ।

'प्राणान् सर्वान् परमात्मनि प्रणामयति एतस्मात् प्रणव इति'

अथर्वशिरसि ।

एवं तेषां स्वाम्यदास्यव्यतिहारेण व्यवहरति इति पण: ।

"पण: व्यवहारे" धातोः

प्रमाणमिति -पूर्ववत्

प्राणनिलयः - ओं प्राणनिलयाय नमः

प्राणधृत - ओंप्राणधृते नमः

प्राणन्तीति प्राणाः अन्ये हि जीवाः ते स्वनीड इव शकुन्ताः तस्मिन् लीयन्ते इति - प्राणनिलयः ।

"पुंसि संज्ञायाम्" [1] इत्यादिना घः

तान् मातृवद्धारयति चेति - प्राणधृत् । धृञः क्विपि तुकः अगुणः जश्त्वचर्त्वैर्धृग् इति पाठेपि उक्तैव गतिः ।

निरुक्ति-

तान् मातृवद्धारयति प्राणधृत् संस्मृतो बुधैः ।

प्राणजीवनः - ओं प्राणजीवनाय नमः

तत्त्वं - ओं तत्त्वाय नमः

तान् प्राणान् अन्नपानादिज्जीवयतिप्राणान् धारयति इति प्राणजीवनः ।

"जीवप्राणधारणे" णिच् ल्युरित्यादि अनः णिलोपः ।

दधिदुग्धयोरिव दधिसारः चिदचितोर्व्याप्ति प्रयोजनाभ्यां सारांशः - तत्त्वम् ।यथा-

---

१- पा०सू० ३।३।११८

परमार्थमशेषस्य जगतः प्रभवाप्ययम् ।
शरण्यं शरणंगच्छन् गोविन्दं नावसीदति ।।

निरुक्ति-

जीवयत्यन्नवज्जीवान् स उक्तः प्राणजीवनः ।
साराशंभूतो जगतो यो सो तत्त्व मिति स्मृतः ।।

एकात्मा - ओं एकात्मने नमः

जन्ममृत्युजरातिगः - ओं जन्ममृत्युजरातिगाय नमः

सर्वस्य चिदचिद्वर्गस्य अयमेक एव शेषी भोक्ता अभिमानी चेति-एकात्मा ।

तथापि तदुभयविधर्मात्मा जन्ममृत्युजरातिगः ।

भूर्भुवः स्वस्तरुस् - ओं भूर्भुवः स्वस्तरवे नमः

भूर्भुवः स्वरुपलक्षितैः पदिपथिकैरिवप्राणिभिरुप -जीव्यमानच्छायपत्रलः पारिजातः - भूर्भुवःस्वस्तरुः ।

समाश्रिताद् ब्रह्मतरोरनन्तान्निसंशयः
पक्वफलप्रपातः इति ।

निरुक्ति-

भूरादिभिर्लक्षितानां जीवानां यः समाश्रयः ।
भूर्भुवः स्वस्तरुः स स्याद्दशाणस्सर्वदो मनुः ।

तार:

सविता

प्रपितामह:

यज्ञो

यज्ञपतिर्

पूर्ववत्

तेषां संसारतारणात् - तार:

सर्वेषां साक्षाज्जनयिता- सविता

पितामहस्यापि जनकत्वात् - प्रपितामह:

स्वाराधनधर्मसमृद्धिरिक्तानां तदर्थिनां स्वयमेव -यज्ञ:

स्वयज्ञफलप्रद: यज्ञपतिरिति -

यज्वा - ओं यज्वने नम:

यज्ञाङ्गो - ओं यज्ञाङ्गाय नम:

आशक्तानां स्वयमेव यजमान: -यज्वा

"सुयजोर्ङ्वनिप"[1]

आश्वमेधिके वैष्णवे धर्मे भगवान् -

तेषां तु पावनायाहं नित्यमेव युधिष्ठिर ।

उभे संध्ये नुतिष्ठामि हयस्कन्नं तद्व्रतंमम् ।।

समर्थानुष्ठितमपि यज्ञान्तरमस्य शेषभूतमिति-यज्ञाङ्ग: ।

---

१- पा०अ० ३।२।१०३

यज्ञवाहन: - ओं यज्ञवाहनाय नम:

तेषां शक्तिश्रद्धाधिकारदानेन यज्ञं वाहयतीति-यज्ञवाहन:

निरुक्ति-

तेषां श्रद्धाधिकारादिदानात् स्याद् यज्ञवाहन:

यज्ञभृत् - ओं यज्ञभृते नम:

यज्ञकृत् - ओं यज्ञकृते नम:

यज्ञी - ओं यज्ञिने नम:

विकलमपि यज्ञं स्वस्मरणपूर्णाहुतिभ्यां पुष्णातीति-यज्ञभृत् यथा-

प्रमादात् कुर्वतां कर्म प्रच्यवत्यध्वरेषु यत् ।
स्मरणादेव तद्विष्णो: संपूर्णं स्यादिति श्रुति: ' इति
जगद्धिताय यज्ञमादौ सृजतीति-यज्ञकृत्
सर्वयज्ञानां शेषी - यज्ञी ।

यज्ञभुग् - ओं यज्ञभुगे नम:

यज्ञसाधन: - ओं यज्ञसाधनाय नम:

तान् भुङ्क्ते भुनक्तिवेति यज्ञभुक् । ते स्य ज्ञानद्वारा सिद्ध्युपाया इति यज्ञसाधन: ।

यज्ञान्तकृत - ओं यज्ञान्तकृते नम:

'सर्वकर्माखिलं पार्थ ज्ञाने परिसमाप्यते'[१] इति

---

१- गीता ४।३३

यज्ञपर्यवसानं स्वतत्त्वज्ञानं करोतीति -यज्ञान्तकृत

यज्ञगुह्यम् - ओं यज्ञगुह्याय नमः

अन्नम् - ओं अन्नाय नमः

यन्निरपेक्षो पि सापेक्षावद्यज्ञेषु पुरोडाशादिकं मुक्त्वा तृप्यंस्तर्पयति, तद्यज्ञविधिगतिसाधनविद एव विदन्ति न स्थूलदृश इति-यज्ञगुह्यम् ।

एवं निष्पादितमोक्तृशक्तिभिर्भज्यत इति अन्नम् ।

अन्नाद, एव च - ओं अन्नादाय नमः

तांश्च तथा भुंक्ते इति अन्नादः ।

को न्य ईदृश इत्येवकारः चशब्दस्सर्वमुक्तमेकत्रास्मिन् समुच्चिनोति ।

निरुक्ति-

य आदत्ते तथा भुंक्ते स्वयं सो ( न्नाद) ईरितः ।

ओं आत्मयोनये नमः

दुग्धेनेव सितावल्यं शर्करा विशेषम् आत्मना स्वात्मना यौति भोक्तारं मिश्रयतीति वा, आत्मनं भोक्तारं स्वात्मना यौतीति वा-आत्मयोनिः ।

'यु मिश्रणे' करणे नि प्रकरणे, धातौ अदादौ

'वहिश्रियुदुग्लाहात्वरिभ्यो नित्' उणादौ

इति कर्तरि निः नित् गुणः

"नेट्"[१] इति नट् आत्मा ह्युक्त: ? यथायथं तृतीयेति द्वितीयेति वा योगविभागात् समास: षष्ठीसमासो वा ।

स्वयं जातो - ओं स्वयंजाताय नम:

वैखान: - ओं वैखानाय नम:

प्रार्थनानिरपेक्षतयाजात: - स्वयंजात:

जनित्वा भवदु:खविखननात् - वैखान:

विपूर्वात् खनते:

"खनो घ च"[२] इति घञ् विखान:

"तत्र साधु:"[३] इत्यण्

निरुक्ति-

जातो यो सो स्वयंजात: प्रार्थनाद्यनपेक्षया

जनित्वाभवदु:खं यो विविधं खनति स्वत: ।

वैखान: स च निर्दिष्ट: सप्ताणों खिलदु:खहा ।

सामगायन: - ओं सामगायनाय नम:

स्वप्राप्तिमधुपानेन हाव् हाव् हाव् इति सामानि गायमानो मुक्तो स्यास्तीति- सामगायन: ।

"ण्युट् च"[४] इति ण्युट्

"एतत्सामगायन्नास्ते"[५] इत्यादि

---

१- पा०अ० ७।२।८  २- पा०अ० ३।३।१२५

३- पा०अ० ४।४।९८  ४- पा०अ० ३।१।१४७

५- तै०भृगु०अ० १०-५

देवकीनन्दनः - ओं देवकीनन्दनाय नमः

एवं विधो न परावस्थः किन्तु- देवकीनन्दनः ।

य एष पृथुदीर्घादास्संबन्धी ते जनार्दनः

एष भूतं भविष्यच्च भवच्च भरतर्षभ इति

निरुक्ति-

देवक्यास्तनयत्वेन परावस्थः प्रजज्ञिवान् ।

वात्सल्यादवरो यो सो देवकीनन्दनः स्मृतः ।।

सृष्टा-

पूर्ववत्

क्षितीशः - ओं क्षितीशायनमः

सर्वेशत्वेपि आर्तिभूयिष्ठत्वात् भूयिष्ठं भूमेरीशः क्षितीशः ।

पापनाशनाय नमः

अत्र दधिनवनीतस्तैन्यरासक्रीडादिकथामृतेन परेषाम् पापनाशनः ।

निरुक्ति-

देवकीतनयत्वेपि प्रपन्नानां विशेषतः

बाह्यान्तः शत्रुसंहारी यस्स स्यात् पापनाशनः ।

नन्दकी- ओं नन्दकिने नमः

भगवतापि मामयं नन्धादिति प्राथ्यों नन्दकः

"आशिषि च"[1]

इति वुन् सो स्य नित्ययोगेति -नन्दकी ।

शाड्ंगधन्वा - ओं शाड्ंगधन्विने नमः

शाड्ंगं च विस्फारितज्याघोषणश्रवणेनाशिताशेष विद्वेषिवार्त स्वसदृशं धनुरस्येति -शाड्ंगधन्वा ।

गदाधरः - ओं गदाधराय नमः

गदाधिपत्नीं च सर्वतस्समुद्भ्रान्तकल्पान्तानलस्फुलिङ्गनीं नित्यसंमोदिनीं कौमोदकीं धारयतीति -गदाधरः ।

रथाड्ंगपाणिर् - ओं रथाड्ंगपाणये नमः

यथोचितं रथाड्ंगं च पाणवस्येति रथाड्ंगपाणिः ।

निरुक्ति-

यथोचितं रथाड्ंगं च पाणौ यस्यास्ति नित्यशः ।
रथाड्ंगपाणि राख्यातो नवाणों भयनाशकः ।।

---

१- पा०अ० ३।१।१५०

सर्वप्रहरणायुध: - ओं सर्वप्रहरणायुधाय नम:

स्वनिष्ठानां सर्वानिष्टोन्मूलयितॄणि असंख्येयानि अमर्यादिसामर्थ्यानि आत्मोचितान्यनन्तान्याभरणविकल्पानि सदा सर्वत्र सर्वथा सर्वप्रकारसमाश्रितसंरक्षादीक्षासत्रदीक्षितानि सर्वैश्वर्य धुरंधराणि, अन्यान्यपि दिव्यायुधान्यस्येति - सर्वप्रहरणायुध: ।

एवं अशेषदोषप्रत्यर्थ्युपाधिसंख्यावधिविरोधितुङ्गमङ्गलस्वरूपरूपगुणविभवचेष्टितमनङ्कुशैश्वर्यसौशील्यमापत् सखमर्थिकल्पकं प्रपन्नैकजीवतुं श्रिय: पतिं भगवन्तं पुरुषोत्तममाश्रितानामाश्चर्यस्सर्व संपत् समुदाय: ।

## उपसंहार

भारतीय संस्कृतिः श्रद्धाप्रधाना विद्यते । एतस्याः संस्कृतेः उषः कालो वैदिककालोऽस्ति । इतः प्राचीनतमा काचित् संस्कृतिरस्ति चेदस्तु परं सा जीर्णा शीर्णा च स्वस्तित्वं वेदे एव सन्निधापितवती ।

वेदविमर्शनेन एतज्ज्ञायते यत् ज्ञानकर्मणोर्मध्ये पूर्वन्नासीत् प्राचीरः व्यवहितिरावरण विकास क्रमेणायातम् । द्रव्ययज्ञज्ञानयज्ञयोर्ज्ञानयज्ञस्य श्रेष्ठता पूर्वमप्यङ्गीकृताचार्यैः । ज्ञान यज्ञे एव सर्वेषां परिसमाप्तिरिति त्ववितथं वचः । चिद्रूपात्मनः प्राप्तिरेव लोकोत्तरचिन्मूमिः अस्याः प्राप्तिरेव कर्मणः ज्ञानस्य साध्यम् । इयं चिन्मयमूमिरेव स्वर्गापरपर्याया ।

मोक्षवैकुण्ठलोकयोः नाम्नश न तु परमा परमार्थिको वेदः । शुक्लयजुर्वेदः कर्मकाण्डस्य मूलाधार भूतस्तस्य च परिसमाप्तिः ईशोपनिषदाख्येज्ञानकाण्डे भवति । इयमुपनिषदसंहिताभाग एवान्तमुक्ता । कर्मवेदान्ते सार्वभौमज्ञानदीपं प्रज्वाल्य तत्वज्ञाने वसानं कृतम् ।

अध्यात्मसाधनाया यन्मूलं यद वेदे उपलभ्यते तत्र देववादस्य परमं महत्वमुपलभ्यते । एतस्य विकासः महाभारते पुराणेषुदृश्यते । देववादस्य मूलाधारः श्रद्धा वर्तते । श्रद्धा मानवचित्तस्य मौलिकवृत्तिरास्ति । अत्र चावेशो विद्यते । देवः आत्मा चातीन्द्रियः अति प्राकृतमेव तत्त्वद्वयम् । अतः कश्चित् देववादी कश्चिदात्मवादी भवति । आत्मवादी संशयस्य निमित्तामादाय अध्यात्मभावनायाः अस्पष्टभावान् अपसारयति । आत्मचेतनायाः प्रसार एवापेक्षितोऽध्यात्मभावनायम् ।

देववादेऽपि विकासे एव तत्परो भवति । यथा त्मवादी आत्मपरायणः सन् विश्वस्योपादानं निमित्तं च आत्मचेतनामेवाङ्गीकरोति । देववादिनोऽपि भूतमात्रे देवतत्वमेवानुस्युतमाप्नोति, भूतानामपि भगवतः आत्मस्वरूपत्वम् विश्वंश्च वासुदेवमयं साधयन्त । तथा च उभावपि वैयष्टपेक्षया समष्टिकल्याण भावनायामेव तत्परावासति । भगवत्सेवायाश्च समग्रं जीवनमर्पयतः । देवत्वप्राप्तौ साधनं भगवत्से

वैव तत्र च श्रद्धाबोधश्च कारणम् ।इयमेव मुनिधारा । स्वाभाविकी आडम्बरशून्या भगवद्दर्शनमेव सर्वथा कर्तव्यमिति ।आचार्येण रामानुजमुनिना सकलस्य ब्रह्माण्डस्य चिदचिद्विशिष्टरूपत्वेन भगवद्रूपत्वं समसाधयत् । विश्वेन सहैकात्म्यमेव दर्शनस्य वेदस्य च उद्घोषः ।अतएवास्मिन् दर्शने सत्कार्यवादतया सर्वस्य परिणामस्य सत्यत्वमङ्गीकृतम् ।

विष्णुसहस्रनामग्रन्थस्य पाठ प्रसङ्गे आचार्यशङ्करस्य रामानुजस्य च भाष्यं सम्यग्वलोकित च स्वसिद्धान्त परिपोषणरूपणतस्य ग्रन्थस्य व्याख्योपव्याख्यानक्रमेणोपबृंहणम् ।समीचीन तममाकलितम् ।तदैव चास्माभिः सुनिश्चितम् यत् विद्यावारिधि प्रसङ्गे एतस्यैव ग्रन्थस्य समीक्षात्मकं तुलनात्मकश्च विश्लेषणं करिष्यत इति तथानुष्ठितम् ।आचार्यदृष्ट्या सर्वेषां नाम्नां व्याकरण दिशा विवरणं तदर्थश्च तथासमन्वित इति कुत्रापि स्वसिद्धान्तव्याकोपोनोपलभ्यते । अतः व्याकरणदृष्ट्या दर्शनदृष्ट्या च विश्लेषणमेवा च अस्य शोधप्रबन्धस्य लक्ष्यम् ।

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः

इति सुधियो विभावयन्तु ।

## ग्रन्थ सूची

केनोपनिषद्भाष्य
गर्ग संहिता
गूढार्थ दीपिका
श्रीमद्भगवद् गीता
छान्दोग्योपनिषद्भाष्य
तैत्तरीयोपनिषद्
पाणिनि अष्टाध्यायी
नारद भक्तिसूत्रम्
प्रश्नोपनिषद् भाष्य
प्रश्नोपनिषद्
ब्रह्मसूत्र शंकरभाष्य
ब्रह्मसूत्र श्रीभाष्यम्
बृहदारण्यकोपनिषद्
भाष्य वार्तिक
भागवत्
भारतीय दर्शनशास्त्रों समन्वय
भारतीय संस्कृति और साधना
मुण्डकोपनिषद् भाष्य
यतीन्द्र मत्दीपिका
मनुस्मृति
बाल्मिकी रामायण
रंग रामायण
अध्यात्म रामायण
विष्णु पुराण

वराह पुराण
वामन पुराण
बृहत् वैष्णव तेंस्पिणी
ललितमाधवम्
ऋग्वेद
यजुर्वेद
अथर्ववेद
शामवेद
ईशोपनिषद्
मत्स्य पुराण
मार्कण्डेय पुराण
महाभारत

